THE

# KASHMIR SERIES OF TEXTS AND STUDIES

EDITED BY

J. C. CHATTERJI, B. A. (Cantab.), VIDYĀVĀRIDHI,

DIRECTOR

OF

The Archæological and Research Department
KASHMIR STATE.

---

**Vol. III.**

# काश्मीरग्रन्थावली

श्रीजगदीशचन्द्र-चट्टोपाध्याय-

संपादिता

**तृतीय खण्डम्**

SRINAGAR,

KASHMIR.

---

1911.

THE

# PRATYABHIJÑĀ HṚIDAYA

BEING

## a Summary of the Doctrines of the Advaita Shaiva Philosophy of Kashmir

BY

KṢHEMARĀJA

अथ

# प्रत्यभिज्ञाहृदयम् ।

श्रीनगर

( कश्मीर )

संवत् १९६८

*Price, Paper cover Re. 1.* *In cloth Rs. 1/8.*

# PREFACE.

The present edition of the Pratyabhijñā Hṛidaya of Kṣhemarāja, printed now for the first time, has been prepared by a collation of the following Manuscripts:—

क—A manuscript in Devanāgarī characters.

ख—An old, much decayed manuscript in Shārada characters.

ग—A Shārada manuscript on paper belonging to Paṇḍit Hara Bhaṭṭa Shāstrin of this Department.

ङ—An old manuscript in Shārada characters on birch bark (obtained from Lahore by M. M. Paṇḍit Mukunda Rāma Shāstrin, Head Paṇḍit of this Department).

In the preparation of the text for the press the Paṇḍits of the Department have given me the same help, in their several capacities, as they rendered in regard to the edition of the previously published volume of the Shiva-Sūtra-Vimarshinī; and I am very grateful to them for this help.

An account of this work by Kṣhemarāja is given in my *Kashmir Shaivaism*, published as the Second Volume of this Series. It bears the same relation to the Advaita Shaiva System of Kashmir as the Vedānta-Sāra of Sadānanda does to the Vedānta System. That is to say, it is intended to be an easy introduction to, and a summary of the doctrines of, the System. Still, Kashmir Shaivaism being a hitherto neglected and little known System, a full comprehension of the Pratyabhijñā Hṛidaya will not perhaps be very easy for most students. To them a preliminary study of the "*Kashmir Shaivaism*" is recommended.

Srinagar,<br>Kashmir. } JAGADĪSHA CHANDRA CHATTERJI.

अथ

# प्रत्यभिज्ञाहृदयसूत्राणां पाठानुक्रमणिका ।

इति प्रत्यभिज्ञाहृदये सूत्रपाठः समाप्तः ॥

अथ

# प्रत्यभिज्ञाहृदयसूत्राणां प्रतिसूत्रं संक्षिप्तविषयार्थसंग्रहः।

१ स्वसंविच्छक्तेरेव मुख्यतया सर्वकारणत्वस्य, सुखोपायेन प्राप्तव्यताया, अत्युत्तमफलस्य च निरूपणम्।

२ संविद्व्यतिरिक्तानां मायाप्रकृत्यादीनां विश्वसृष्टौ निमित्तोपादानादिभावपरिहारप्रयोजनं विश्वस्य संविदैकात्म्यसत्तया अवस्थितिनिरूपणम्।

३ स्वसंविन्मयमात्रतायामपि तत्तदनुरूपविभागेन विश्वस्वरूपप्रतिपादनम्।

४ संकुचितचित्तया भेदावभासमापन्नस्य पशोरपि परमशिववत् विश्वरूपताव्याहरणम्।

५ नीलसुखादिरूपार्थग्रहणोन्मुखत्वेन संकुचितग्राहकरूपत्वस्य, चित्तस्य वस्तुतः चितिस्वरूपत्वनिरूपणम्।

६ मायाप्रमातुरपि चित्तमयतानिरूपणम्।

७ प्रकाशरूपत्व-संकोचावभासवत्त्वाभ्यां द्वैरूप्य-त्रिमलावृतत्व-शून्यादिचतुरात्मत्व-शिवादिपञ्चत्रिंशत्तत्त्वस्वभावादिसत्तया नानाविधप्रपञ्चाभासेपि, चिदात्मनः तात्त्विकैकात्मत्वनिरूपणम्।

८ चार्वाकनैयायिकादिदर्शनान्तराणामर्वाचीनपदप्रतिष्ठाव्यवस्थितेः, नीलसुखादिसंवित्स्थितीनां स्वात्मस्वरूपाभिव्यक्त्युपायत्वस्य च कथनम्।

९ आत्मनः स्वातन्त्र्येण अभेदव्याप्तिनिमज्जनभेदव्याप्त्यवलम्बनात् इच्छादिशक्तिसंकोचोत्तरं मलावृतसंसारित्वप्रदर्शनम्।

१० शुद्धेतराध्वस्फारणक्रमेण स्वरूपविकासरूपसृष्ट्यादिपञ्चकृत्य-कर्तुः भगवतः संसार्यवस्थापत्तावपि स्वरूपाभिज्ञानहेतुकसृष्ट्यादिपञ्चविधकृत्यकारित्वनिरूपणम् ।

११ आत्मनः संसार्यवस्थायामेव पञ्चविधकृत्यकारित्वरहस्याभिज्ञानानां प्रदर्शनम् ।

१२ पूर्वनिरूपितपञ्चविधकृत्यकारितानभिज्ञस्य स्वशक्तिकर्तृकव्यामोहिततालक्षणपशुदशापोषणहेतूनां निरूपणम् ।

१३ स्वीयपञ्चकृत्यकारित्वपरिज्ञाने तदन्यथात्वकारिहेत्वपगमात् मोहनिवृत्त्या स्वातन्त्र्यलाभात् अन्तर्मुखीभूतस्य चित्तस्य स्वरूपप्रत्यापत्त्यात्मचिद्रूपतावाप्तिप्रदर्शनम् ।

१४ मायाप्रमातृतायामपि चिच्छक्तेः अंशतः स्वकार्यकारितानिरूपणम् ।

१५ अवाप्तस्वरूपस्फारचित्यात्मबललाभे पूर्वनिर्दिष्टमायाप्रमातुः विश्वस्य आत्मसात्काररूपाभेदावभासनानिरूपणम् ।

१६ विश्वात्मसात्कारसमावेशलाभात् देहादिमत्त्वेऽपि जीवन्मुक्तिलक्षणकथनम् ।

१७ संविद्विकासे ब्रह्मनाडीविकासे वा चिदानन्दलाभात्मजीवन्मुक्तिफलनिरूपणम् ।

१८ प्रोक्तद्विविधमध्यविकासोपायभूतानां विकल्पक्षयादियुक्तीनां प्रदर्शनम् ।

१९ समावेशसमापत्त्यात्मसमाधिलाभस्य नित्योदिततायां युक्तिनिरूपणम् ।

२० समाधिलाभस्य पार्यन्तिकफलकथनम् ।

इति प्रत्यभिज्ञाहृदयसूत्राणां संक्षिप्तविषयार्थसंग्रहः ॥

ओं नमो मङ्गलमूर्तये ।

अथ

# प्रत्यभिज्ञाहृदयम् ।

नमः शिवाय सततं पञ्चकृत्यविधायिने ।
चिदानन्दघनस्वात्मपरमार्थावभासिने ॥ १ ॥
शांकरोपनिषत्सारप्रत्यभिज्ञामहोदधेः ।
क्षेमेणोद्ध्रियते सारः संसारविषशान्तये ॥ २ ॥

इह ये सुकुमारमतयोऽकृततीक्ष्णतर्कशास्त्रपरिश्रमाः शक्तिपातोन्मिषित-पारमेश्वरसमावेशाभिलाषिणः कतिचित् भक्तिभाजः, तेषाम् ईश्वरप्रत्यभिज्ञोपदेशतत्त्वं[1] मनाक् उन्मील्यते ।

---

१ तत्त्वं हि

'चिदानन्दैषणाज्ञानक्रियाणां सुस्फुटत्वतः ।
शिव-शक्ति-सदीशान-विद्याख्यं तत्त्वपञ्चकम् ॥'

इति पञ्चकत्वेन आम्नातम् । उन्मील्यते इति, तेषां कृते संक्षिप्य प्रकटीक्रियते इति वाक्यार्थः ।

---

पं० ४ क. ख. ग. पु० उद्धरामि परं सारं संसारविषशान्तिदम् ॥ इति पाठः ।
पं० ५ ग. पु० कृततीक्ष्णशास्त्र इति पाठः ।
पं० ६ ङ. पु० शक्तिपातवशोन्मिषत्पारमेश्वरेति पाठः ।
पं० ७ ग. पु० समावेशाभिलाषाः इति पाठः ।

तत्र स्वात्मदेवताया एव सर्वत्र कारणत्वं सुखोपायप्राप्यत्वं महाफलत्वं च अभिव्यङ्क्तुमाह

चितिः स्वतन्त्रा विश्वसिद्धिहेतुः ॥ १ ॥

'विश्वस्य'—सदाशिवादेः भूम्यन्तस्य 'सिद्धौ'—निष्पत्तौ, प्रकाशने स्थित्यात्मनि, परप्रमातृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा 'चितिः' एव भगवती 'स्वतन्त्रा'—अनुत्तरविमर्शमयी शिवभट्टारकाभिन्ना 'हेतुः'—कारणम् । अस्यां हि प्रसरन्त्यां जगत् उन्मिषति व्यवतिष्ठते च, निवृत्तप्रसरायां च निमिषति;—इति स्वानुभव एव अत्र साक्षी । अन्यस्य तु मायाप्रकृत्यादेः चित्प्रकाशभिन्नस्य अप्रकाशमानत्वेन असत्त्वात् न क्वचिदपि हेतुत्वम्; प्रकाशमानत्वे तु प्रकाशैकात्म्यात् प्रकाशरूपा चितिरेव हेतुः;

पं० १ ख. ङ. पु० सर्वत्र इति पदं नास्ति ।
पं० २ क. ग. पु० महाफलाभिव्यक्तिं चाह इति पाठः ।
पं० ५ ख. ङ. पु० स्वे चेत्यात्मनि इति पाठः ।
पं० ७ ख. ङ. पु० तन्त्रानन्तविमर्शमयी इति पाठः ।
पं० १० ख. ग. पु० च इति पदं नास्ति ।
पं० १२ ख. पु० अप्रकाशत्वेन इति पाठः ।
पं० १३ ङ. पु० असत्त्वादपि न क्वचित् हेतुत्वम् इति पाठः ।
पं० १४ ख. ङ. पु० चिदेव इति पाठः ।

न त्वसौ कश्चित् । अत एव देशकालाकारा एतत्सृष्टा एतदनुप्राणिताश्च नैतत्स्वरूपं भेत्तुमलम्;—इति व्यापक-नित्योदित-परिपूर्णरूपा इयम् ।—इत्यर्थलभ्यमेव एतत् ।

ननु जगदपि चितो भिन्नं नैव किञ्चित्; अभेदे च कथं हेतुहेतुमद्भावः? उच्यते। चिदेव भगवती स्वच्छस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरति,—इत्येतावत्परमार्थोऽयं कार्यकारणभावः। यतश्च इयमेव प्रमातृ-प्रमाण-प्रमेयमयस्य विश्वस्य सिद्धौ—प्रकाशने हेतुः, ततोऽस्याः स्वतन्त्रापरिच्छिन्नस्वप्रकाशरूपायाः

---

२ यदुक्तम्

देशकालाकारभेदः संविदो नहि युज्यते ।
तस्मादेकैव पूर्णाहं-विमर्शात्मा चिदुच्यते ॥

इति ।

---

पं० १ ग. पु० न त्वन्यः कश्चिदिति पाठः ।
पं० २ क. ग. पु० एतत्प्राणिता इति पाठः ।
पं० ३ क. पु० परिपूर्णोऽयम् इति, ग. पु० परिपूर्णेयम् इति पाठः ।
पं० ४ क. ग. ङ. पु० इत्ययत्नलभ्यमेव इति पाठः ।
पं० ६ क. पु० कथं हेतुसद्भाव इति पाठः ।
पं० ७ ख. ग. ङ. पु० जगदात्मना विश्वरूपेण इति पाठः ।
पं० ९ क. पु० अतश्चेयमिति, ङ. पु० यत् च इयमेवेति पाठः ।
पं० ११ ख. ङ. पु० स्वतन्त्राविच्छिन्नेति पाठः ।

सिद्धौ अभिनवार्थप्रकाशनरूपं न प्रमाणवराकमुपयुक्तम् उपपन्नं वा[3] । तदुक्तं त्रिकसारे

'स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला[4] ॥'

इति ।

यतश्च इयं विश्वस्य सिद्धौ पराद्वयसामरस्यापादनात्मनि च संहारे हेतुः, तत एव स्वतन्त्रा । प्रत्यभिज्ञातस्वातन्त्र्या सती, भोगमोक्षस्वरूपाणां विश्वसिद्धीनां हेतुः।—इति आवृत्त्या व्याख्येयम्।

अपि च 'विश्वं'—नील-सुख-देह-प्राणादि[5]; तस्य या 'सिद्धिः'—प्रमाणोपारोहक्रमेण विमर्शमयप्रमात्रावेशः, सैव[6] 'हेतुः'—परिज्ञाने उपायो यस्याः।

---

३ नहि सूर्यप्रकाशने दीपान्तरमुपयुज्यते इति भावः ।

४ यो लङ्घितुमीहते तस्य यथा पादोद्देशे शिरो न स्यात् तथा इयमित्यत्र संबन्धः ।

५ नीलं बहिरिन्द्रियगम्यम्, सुखमन्तरिन्द्रियगम्यम्, प्राणादि जीवचेष्टागम्यम् ।

६ यथा दूरस्थस्य अग्नेः अनुमितौ धूमः साधनं तद्वदित्यर्थः ।

---

पं० १ ख. ग. पु० सिद्धौ प्रकाशनेऽभिनवार्थप्रकाशनेति, क. पु० अभिनवप्रकाशरूपम् इति पाठः ।

पं० ७ ख. ङ. पु० अत एवेति पाठः ।

पं० ८ ख. ङ. पु० प्रत्यभिज्ञातस्वातन्त्र्या भोगमोक्षसिद्धीनां हेतुः इति पाठः।

पं० ११ क. पु० प्रमाणोपहारक्रमेण इति, ग. पु० प्रमाणोपाहरणक्रमेणेति पाठः । ख. पु० विमर्शमात्रावेश इति पाठः ।

पं० १२ ख. ङ. पु० स एव हेतुरिति पाठः ।

अनेन च सुखोपायत्वमुक्तम् । यदुक्तं श्रीविज्ञान-भट्टारके

> 'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
> योगिनां तु विशेषोऽयं संबन्धे सावधानता ॥'

इति ।

'चितिः'-इति एकवचनं देशकालाद्यनवच्छिन्नताम् अभिदधत् समस्तभेदवादानाम् अवास्तवतां व्यनक्ति । 'स्वतन्त्र'-शब्दो ब्रह्मवादवैलक्षण्यम् आचक्षाणः चितो माहेश्वर्यसारतां ब्रूते । 'विश्व'-इत्यादिपदम् अशेषशक्तित्वं, सर्वकारणत्वं, सुखोपायत्वं महाफलं च आह ॥ १ ॥

ननु विश्वस्य यदि चितिः हेतुः, तत् अस्या उपादानाद्यपेक्षायां भेदवादापरित्यागः स्यात्—इत्याशङ्क्य आह

**स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति ॥ २ ॥**

'स्वेच्छया', न तु ब्रह्मादिवत् अन्येच्छया,

---

पं० ३ क. पु० ग्राह्यग्राहकसंबन्ध इति पाठः ।
पं० ६ क. पु० अवच्छिन्नतामेवाभिदधत् इति पाठः ।
पं० ९ क. पु० माहेश्वरतां ब्रूते इति, ख. ङ. पु० माहेश्वरसारताम् इति पाठः ।
पं० १० ग. पु० अशेषशक्तिमत्त्वम् इति पाठः ।
पं० १२ ङ. पु० तदा अस्या इति पाठः ।

तयैव च, न तु उपादानाद्यपेक्षया,—एवं हि प्रागुक्तस्वातन्त्र्यहान्या चित्त्वमेव न घटेत—'स्व भित्तौ', न तु अन्यत्र क्वापि, प्राक् निर्णीतं 'विश्वं' दर्पणे नगरवत् अभिन्नमपि भिन्नमिव 'उन्मीलयति'। उन्मीलनं च अवस्थितस्यैव प्रकटीकरणम् ।—इत्यनेन जगतः प्रकाशैकात्म्येन अवस्थानम् उक्तम् ॥ २ ॥

अथ विश्वस्य स्वरूपं विभागेन प्रतिपादयितुमाह

## तन्नाना अनुरूपग्राह्यग्राहकभेदात् ॥ ३ ॥

'तत्' विश्वं 'नाना'—अनेकप्रकारम् । कथं ? 'अनुरूपाणां'—परस्परौचित्यावस्थितीनां 'ग्राह्याणां ग्राहकाँणां' च 'भेदात्'—वैचित्र्यात् । तथा च

७ ग्राहकाः सप्त प्रमातारः, ते च (१) शिवः (२) मन्त्रमहेश्वराः (३) मन्त्रेश्वराः (४) मन्त्राः (५) विज्ञानाकलाः (६) प्रलयाकलाः (७) सकलाः इत्यागमप्रसिद्धाः ।

पं० १ क. पु० तथैव चेति पाठः।

पं० २ क. पु० चित्तत्त्वमेव इति पाठः ।

पं० ४ क. ग. पु० दर्पणनगरवत् इति समस्तः पाठः ।

पं० ५ क. पु० उन्मीलयतीत्यनन्तरम् 'अवभासयति' इत्यप्यधिकः पाठोऽस्ति।

पं० १३ ख. पु० अनणुरूपाणाम् इति पाठः ।

पं० १४ क. पु० ग्राहकताभेदात् इति पाठः ।

सदाशिवतत्त्वे अहन्ताच्छादित-अस्फुटेदन्ताम-यं यादृशं परापररूपं विश्वं ग्राह्यं, तादृगेव श्रीसदाशिवभट्टारकाधिष्ठितो मन्त्रमहेश्वराख्यः प्रमातृवर्गः परमेश्वरेच्छावकल्पिततथावस्था-नः। ईश्वरतत्त्वे स्फुटेदन्ताहन्तासामानाधिकर-ण्यात्म यादृक् विश्वं ग्राह्यं, तथाविध एव ईश्वरभट्टारकाधिष्ठितो मन्त्रेश्वरवर्गः। विद्यापदे श्रीमदनन्तभट्टारकाधिष्ठिता बहुशाखावान्तर-भेदभिन्ना यथाभूता मन्त्राः प्रमातारः, तथा-भूतमेव भेदैकसारं विश्वमपि प्रमेयम्। मायो-र्ध्वे यादृशा विज्ञानाकलाः कर्तृताशून्यशुद्धबो-धात्मानः, तादृगेव तद्भेदसारं सकल-प्रलया-कलात्मक-पूर्वावस्थापरिचितम् एषां प्रमेयम्। मायायां शून्यप्रमातॄणां प्रलयकेवलिनां स्वो-

---

पं॰ १ क. पु॰ अहन्ताच्छादितेऽपि स्फुटे इदन्तामयम् इति पाठः।
पं॰ ३ ख. पु॰ भट्टारको मन्त्रमहेश्वराख्य इति पाठः।
पं॰ ५ क. पु॰ समानाधिकारात्म इति, ग. पु॰ सामानाधिकरण्यात्मतया इति पाठः।
पं॰ ७ ग. पु॰ विद्यातत्त्वे इति, ख. पु॰ विद्यापदेश—श्रीमत् इति पाठः।
पं॰ ८ ग. पु॰ अधिष्ठितानन्तबहुशाखेति, क. पु॰ बहुशाखा अवान्तर-भिन्ना इति, ख. पु॰ अधिष्ठितबहुशाखेति पाठः।
पं॰ ११ ख. पु॰ कर्तृत्वशून्येति पाठः।
पं॰ १२ ख. पु॰ अभेदसारसकलेति समस्तः पाठः।
पं॰ १४ क. पु॰ मायायाः प्रमातॄणामिति पाठः।

चितं प्रलीनकल्पं प्रमेयम् । क्षितिपर्यन्तावस्थि-
तानां तु सकलानां सर्वतो भिन्नानां परिमितानां
तथाभूतमेव प्रमेयम् । तदुत्तीर्णशिवभट्टारकस्य
प्रकाशैकवपुषः प्रकाशैकरूपा एव भावाः। श्रीम-
त्परमशिवस्य पुनः विश्वोत्तीर्ण-विश्वात्मक-पर-
मानन्दमय-प्रकाशैकघनस्य एवंविधमेव शिवा-
दि-धरण्यन्तम् अखिलम् अभेदेनैव स्फुरति; न
तु वस्तुतः अन्यत् किंचित् ग्राह्यं ग्राहकं वा; अपि
तु श्रीपरमशिवभट्टारक एव इत्थं नानावैचि-
त्र्यसहस्रैः स्फुरति ।—इत्यभिहितप्रायम् ॥ ३ ॥

यथा च भगवान् विश्वशरीरः, तथा

चितिसंकोचात्मा चेतनोऽपि
संकुचितविश्वमयः ॥ ४ ॥

श्रीपरमशिवः स्वात्मैक्येन स्थितं विश्वं
सदाशिवाद्युचितेन रूपेण अवबिभासयिषुः पूर्वं

पं० १ क. पु० स्थितिपर्यन्तेति पाठः ।

पं० ९ ङ. पु० इत्थमित्थमेतदिति-नानाविधवैचित्र्येति पाठः ।

पं० ११ यथा च इत्यादि-अवतरणिकावाक्यपाठः ख. ङ. पुस्तकाभ्यामुपन्यस्तः।

पं० १५ ग. पु० सदाशिवाद्युदितेनेति, ख. ङ. पु० सदाशिवाभ्युदितेन
इति पाठः ।

चिदैक्याख्यातिमयानाश्रिताशिवपर्याय-शून्यातिशून्यात्मतया प्रकाशाभेदेन प्रकाशमानतया स्फुरति; ततः चिद्रसाश्यानतारूपाशेषतत्त्वभुवन-भाव-तत्तत्प्रमात्राद्यात्मतयापि प्रथते । यथा च एवं भगवान् विश्वशरीरः, तथा 'चितिसंकोचात्मा' संकुचितचिद्रूपः 'चेतनो' ग्राहकोऽपि वटधानिकावत् संकुचिताशेषविश्वरूपः । तथा च सिद्धान्तवचनम्

'विग्रहो विग्रही चैव सर्वविग्रहविग्रही ।'

इति । त्रिशिरोमतेऽपि

'सर्वदेवमयः कायस्तं चेदानीं शृणु प्रिये ।
पृथिवी कठिनत्वेन द्रवत्वेऽम्भः प्रकीर्तितम् ॥'

इत्युपक्रम्य

'त्रिशिरोभैरवः साक्षाद्व्याप्य विश्वं व्यवस्थितः ॥'

इत्यन्तेन ग्रन्थेन ग्राहकस्य संकुचितविश्वमयत्वमेव व्याहरति ।

अयं च अत्राशयः—ग्राहकोऽपि अयं प्रकाशै-

---

पं० ३ क. ग. पु० रसाश्यानरूपः अशेष० इति पाठः ।
पं० ६ क. पु० असंकुचित इति पाठः ।
पं० ११ ख. पु० कालस्तच्चेदानीम् इति पाठः ।
पं० १५ ख. ङ. पु० ग्राहकेण संकुचितेति० ग. पु० ग्राहकेणासंकुचित० इति पाठः ।

कात्म्येन उक्तागमयुक्त्या च विश्वशरीरशिवैकरूप एव, केवलं तन्मायाशक्त्या अनभिव्यक्तस्वरूपत्वात् संकुचित इव आभाति; संकोचोऽपि विचार्यमाणः चिदैकात्म्येन प्रथमानत्वात् चिन्मय एव, अन्यथा तु न किंचित् ।—इति सर्वो ग्राहको विश्वशरीरः शिवभट्टारक एव । तदुक्तं मयैव

'अख्यातिर्यदि न ख्याति ख्यातिरेवावशिष्यते ।
ख्याति चेत् ख्यातिरूपत्वात् ख्यातिरेवावशिष्यते ॥'

इति । अनेनैव आशयेन श्रीस्पन्दशास्त्रेषु

---

८ यदुक्तं न्यायभूषणे कर्तृकर्मादिकारकलक्षणविचारे । संभूय कारकाणां क्रियाजनकत्वे हि तुल्यव्यापारत्वात् कः साधकतमार्थः स्वतन्त्रार्थो वा इति सार्वपारिषदं व्याकरणं विरुध्येत । अत एव ज्ञातृव्यापारस्य प्रमाणत्वमाहुः, स च ज्ञातृव्यापारः चिद्रूपे ज्ञातरि तादात्म्येन स्थितत्वात् बोधात्मकः इति । तथा च अत्रैव 'विवक्षातः कारकाणि भवन्ति' इति । यथा चितिः विश्वं साधयति, चितिमासाद्य विश्वं भवति, चित्या विश्वमीश्वरः करोति, चितेः विश्वं भवति, चितेः विकारो विश्वं भवति, चितौ विश्वं स्थितमिति ॥

---

पं० २ ख. पु० केवलं मायाशक्त्यनभिव्यक्तेति पाठः ।

पं० ३ ख. पु० एव इति पाठः ।

पं० ६ क. पु० विश्वशरीरशिवभट्टारक एवेति पाठः ।

पं० ८ क. पु० ख्यातिः ख्यातिरेव इति, ग. पु० यदि ख्यातिश्चेत् ख्यातिरेव इति पाठः ।

'यस्मात्सर्वमयो जीवः........................ ।'

इत्युपक्रम्य

'तेन शब्दार्थचिन्तासु न सावस्था न यः शिवः ॥'

इत्यादिना शिवजीवयोरभेद एव उक्तः । एतत्तत्त्वपरिज्ञानमेव मुक्तिः, एतत्तत्त्वापरिज्ञानमेव च बन्धः;—इति भविष्यति एव एतत् ॥ ४ ॥

ननु ग्राहकोऽयं विकल्पमयः, विकल्पनं च चित्तहेतुकं; सति च चित्ते, कथमस्य शिवात्मकत्वम्?—इति शङ्कित्वा चित्तमेव निर्णेतुमाह

## चितिरेव चेतनपदादवरूढा चेत्यसंकोचिनी चित्तम् ॥ ५ ॥

न चित्तं नाम अन्यत् किंचित्, अपि तु सैव भगवती तत् । तथा हि सा स्वं स्वरूपं

---

१ अन्यथा 'तटः पिपतिषति' इत्यादि-शब्दार्थचिन्तासु निश्चेतनस्य तटस्य कथमिच्छा घटेत ।

---

पं० ३ ख. ङ. पु० तस्माच्छब्दार्थेति, ग. पु० तस्मात्सर्वोऽर्थ इति पाठः ।
पं० ४ ङ. पु० जीवशिवयोरभेद उक्त इति पाठः, ङ.पु० एव पदं नास्ति।
पं० १० ख. ङ. पु० चेत्यभावैः संकोचिनी इति पाठः ।
पं० १२ क. पु० चितिरेवेति चित्तं न चान्यत्किंचित् इति, ग. पु० चित्तं नान्यत् किंचित् अपि तु सैव इति पाठः ।

गोपयित्वा यदा संकोचं गृह्णाति, तदा द्वयी गतिः; कदाचित् उल्लसितमपि संकोचं गुणीकृत्य चित्प्राधान्येन स्फुरति, कदाचित् संकोचप्रधानतया । चित्प्राधान्यपक्षे सहजे प्रकाशमात्रप्रधानत्वे विज्ञानाकलता; प्रकाशपरामर्शप्रधानत्वे तु विद्याप्रमातृता । तत्रापि क्रमेण संकोचस्य तनुतायाम्, ईश-सदाशिवानाश्रितरूपता । समाधिप्रयत्नोपार्जिते तु चित्प्रधानत्वे शुद्धाध्वप्रमातृता क्रमात्क्रमं प्रकर्षवती । संकोचप्राधान्ये तु शून्यादिप्रमातृता । एवमवस्थिते सति, 'चितिरेव' संकुचितग्राहकरूपा 'चेतनपदात् अवरूढा'—अर्थग्रहणोन्मुखी सती 'चेत्येन'—नील-सुखादिना 'संकोचिनी' उभयसंकोचसंकुचितैव चित्तम् । तथा च

पं० १ क. ग. पु० 'संकोचं' इति पदं नास्ति ।

पं० ५ ग. पु० प्रधानविज्ञानाकलता इति पाठः ।

पं० ७ क. पु० संकोचांशतनुतायाम् इति, ग. पु० संकोचतनुतायाम् इति पाठः ।

पं० ८ ग. पु० समाधिप्रयत्नोपार्जितेन चित्प्रधानत्वेन इति पाठः ।

पं० ९ क. पु० संकोचांशप्राधान्येन इति पाठः ।

पं० १० ङ पु० एवमेव स्थिते सति इति पाठः ।

पं० ११ क. पु० असंकुचितग्राहकरूपाचेतनादवरूढार्थग्रहेति पाठः ।

'स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ॥'

इत्यादिना स्वातन्त्र्यात्मा चितिशक्तिरेव ज्ञान-क्रिया-मायाशक्तिरूपा पशुदशायां संकोचप्रकर्षात् सत्त्व-रजस्तमःस्वभावचित्तात्मतया स्फुरति;—इति श्रीप्रत्यभिज्ञायामुक्तम् । अत एव श्रीतत्त्वगर्भस्तोत्रे विकल्पदशायामपि तात्त्विकस्वरूपसद्भावात् तदनुसरणाभिप्रायेण उक्तम्

'अत एव तु ये केचित्परमार्थानुसारिणः ।
तेषां तत्र स्वरूपस्य स्वज्योतिष्ट्वं न लुप्यते ॥'

इति ॥ ५ ॥

चित्तमेव तु मायाप्रमातुः स्वरूपम्,—इत्याह

**तन्मयो मायाप्रमाता ॥ ६ ॥**

देहप्राणपदं तावत् चित्तप्रधानमेव; शून्य-

---

पं० ३ ग. पु० इति प्रत्यभिज्ञोक्तनीत्या स्वातन्त्र्येति पाठः ।
पं० ४ क. पु० संकोचप्रकाशात् इति पाठः ।
पं० ६ ग. पु० 'श्रीप्रत्यभिज्ञायामुक्तम्' इति वाक्यं नास्ति ।
पं० ८ ख. पु० तदनुसारिणा इति पाठः ।
पं० ९ क. पु० अत एव तु केषांचित्परमार्थेति पाठः ।
पं० १० ग. ङ. पु० तेषां तत्रापि रूपस्य ( तत्रापि, विकल्पदशायामपि ) इति पर्यायोपेतः पाठः ।
पं० १४ ङ. पु० देहप्राणपदात् तावच्चित्तं प्रधानमेव इति पाठः ।

भूमिरपि चित्तसंस्कारवत्येव; अन्यथा ततो व्युत्थितस्य स्वकर्तव्यानुधावनाभावः स्यात्;— इति चित्तमय एव मायीयः प्रमाता । अमुनैव आशयेन शिवसूत्रेषु वस्तुवृत्तानुसारेण

'चैतन्यमात्मा' ( १–१ )

इत्यभिधाय, मायाप्रमातृलक्षणावसरे पुनः

'चित्तमात्मा' ( ३–१ )

इत्युक्तम् ॥ ६ ॥

अस्यैव सम्यक् स्वरूपज्ञानात् यतो मुक्तिः, असम्यक् तु संसारः, ततः तिलश एतत्स्वरूपं निर्भङ्क्तुमाह

---

१० चैतन्यमात्मा इति, चेतयते इति चेतनः, सर्वेषु ज्ञानेषु सर्वासु च क्रियासु स्वतन्त्रः; तस्य भावः चैतन्यं, सर्वज्ञानक्रियासंबन्धमयं परिपूर्णं स्वातन्त्र्यं; तच्च परमशिवस्यैव भगवतः संभवति, नान्येषां तत्परतन्त्राणामिति प्रथमसूत्रमुक्त्वा पुनः तृतीयोन्मेषे 'चित्तमात्मा' इत्युक्तम् । अस्यार्थः यदेतत् विषयवासनाच्छुरितत्वात् नित्यं, तदध्यवसायादिव्यापारबुद्ध्यहंकृन्मनोरूपं चित्तं, तदेव अतति चिदात्मकस्वस्वरूपाख्यात्या सत्त्वादिवृत्त्यवलम्बनेन योनीः संचरति इति आत्मा अणुरित्यर्थः; न तु चिदेकरूपस्य अस्य अतनमस्ति; अत एव 'चैतन्यमात्मा' इति स्वभावभूततात्त्विकैतत्स्वरूपप्रतिपादनाशयेन पूर्वमात्मा लक्षितः, अनेन तु एतदीयसंकोचावभासप्रधानाणवदशौचित्येन, इति न पूर्वापरवैषम्यम् ।

---

पं० ४ ग. पु० वस्तुवृत्त्यनुसारेण इति पाठः ।

पं० ११ ग. पु० विभङ्क्तुम् इति पाठः ।

# स चैको द्विरूपस्त्रिमयश्चतुरात्मा सप्तपञ्चकस्वभावः ॥ ७ ॥

निर्णीतदृशा चिदात्मा शिवभट्टारक एव 'एक' आत्मा, न तु अन्यः कश्चित्; प्रकाशस्य देशकालादिभिः भेदायोगात्; जडस्य तु ग्राहकत्वानुपपत्तेः । प्रकाश एव यतः स्वातन्त्र्यात् गृहीतप्राणादिसंकोचः संकुचितार्थग्राहकतामश्नुते, ततः असौ प्रकाशरूपत्व-संकोचावभासवत्त्वाभ्यां 'द्विरूपः' । आणव-मायीय-कार्ममलावृतत्वात् 'त्रिमयः'[११] । शून्य-प्राण-पुर्यष्टक-

---

११ वामदेवेन च मलत्रयस्वरूपमभिहितमस्ति । यथा

गोपितस्वमहिम्नोऽस्य संमोहाद्विस्मृतात्मनः ।
यः संकोचः स एवास्मिन्नाणवो मल उच्यते ॥ १ ॥
षट्कञ्चुकव्याप्तिवशाद्विलोपितनिजस्थितेः ।
भूतदेहस्थितिर्यासौ मायीयो मल उच्यते ॥ २ ॥
यदन्तःकरणाधीनबुद्धिकर्मेन्द्रियादिभिः ।
बहिर्व्याप्रियते कार्मे मलमेतस्य तन्मतम् ॥ ३ ॥

तत्र आणवेनैकेन मलेन संयुक्तो विज्ञानाकलः; द्वाभ्यामाणव-मायीयाभ्यामपवेद्यः प्रलयाकलः; त्रिभिः आणव-मायीय-कार्ममलैः संवेद्यः कलादिधरण्यन्ततत्त्वमयः सकलः; इति ।

---

पं० ६ ख. ग. ङ. पु० एव च इति पाठः ।

पं० ९ ग. पु० मायीयाणवकार्ममलिनत्वात् इति पाठः ।

पं० १० क. पु० मलात्रिमय इति पाठः ।

शरीरस्वभावत्वात् 'चतुरात्मा'। 'सप्तपञ्चकानि'— शिवादिपृथिव्यन्तानि पञ्चत्रिंशत्तत्त्वानि 'तत्स्वभावः'। तथा शिवादि-सकलान्त-प्रमातृसप्तक-स्वरूपः; चिदानन्देच्छा-ज्ञान-क्रियाशक्तिरूपत्वेऽपि अख्यातिवशात् कला-विद्या-राग-काल-नियतिकञ्चुकवलितत्वात् पञ्चकस्वरूपः। एवं च शिवैकरूपत्वेन, पञ्चत्रिंशत्तत्त्वमयत्वेन, प्रमातृसप्तकस्वभावत्वेन चिदादिशक्तिपञ्चकात्मकत्वेन च अयं प्रत्यभिज्ञायमानो मुक्तिदः; अन्यथा तु संसारहेतुः ॥ ७ ॥

एवं च

**तद्भूमिकाः सर्वदर्शनस्थितयः ॥८॥**

'सर्वेषां' चार्वाकादिदर्शनानां 'स्थितयः'— सिद्धान्ताः 'तस्य' एतस्य आत्मनो नटस्येव स्वेच्छावगृहीताः कृत्रिमा 'भूमिकाः'। तथा च

'चैतन्यविशिष्टं शरीरमात्मा ।'

इति चार्वाकाः ।

---

पं० १ क. पु० पञ्चकानि पृथिव्यन्तानि इति 'शिवादि' पदहीनः पाठः ।
पं० ३ क. पु० सकलान्तं प्रमातृरूप इति पाठः ।
पं० ७ ख. ङ. पु० शिवैकत्वेन इति पाठः ।
पं० १५ क. ङ. पु० कृत्रिमभूमय इति पाठः ।

नैयायिकादयो ज्ञानादिगुणगणाश्रयं बुद्धि-तत्त्वप्रायमेव आत्मानं संसृतौ मन्यन्ते, अप-वर्गे तु तदुच्छेदे शून्यप्रायम् ।

अहं-प्रतीतिप्रत्येयः सुखदुःखाद्युपाधिभिः तिरस्कृतः आत्मा—इति मन्वाना मीमांसका अपि बुद्धावेव निविष्टाः ।

ज्ञानसंतान एव तत्त्वम्—इति सौगता बुद्धि-वृत्तिषु एव पर्यवसिताः ।

प्राण एव आत्मा—इति केचित् श्रुत्यन्तविदः।

असदेव इदमासीत्—इत्यभावब्रह्मवादिनः शून्यभुवमवगाह्य स्थिताः ।

माध्यमिका अपि एवमेव ।

परा प्रकृतिः भगवान् वासुदेवः तद्विस्फु-लिङ्गप्राया एव जीवाः—इति पाञ्चरात्राः परस्याः प्रकृतेः परिणामाभ्युपगमात् अव्यक्ते एव अभिनिविष्टाः ।

---

पं० ४ क. पु० अहं-प्रत्ययः सुखदुःखेत्यादि पाठः । ग. ख. पु० दुःखा-द्युपाध्यभिभूत आत्मेति पाठः ।

पं० ९ क. पु० शून्यवादिन इति पाठः ।

पं० १३ क. पु० वासुदेवपदं नास्ति ।

सांख्यादयस्तु विज्ञानाकलप्रायां भूमिम् अवलम्बन्ते ।

सदेव इदमग्र आसीत्—इति ईश्वरतत्त्व-पदमाश्रिता अपरे श्रुत्यन्तविदः ।

शब्दब्रह्ममयं पश्यन्तीरूपम् आत्मतत्त्वम्—इति वैयाकरणाः श्रीसदाशिवपदमध्यासिताः । एवमन्यदपि अनुमन्तव्यम् । एतच्च आगमेषु

> ‘बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः ।
> स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः ॥’

इत्यादिना निरूपितम् ।

विश्वोत्तीर्णमात्मतत्त्वम्—इति तान्त्रिकाः ।

विश्वमयम्—इति कुलाद्याम्नायनिविष्टाः ।

विश्वोत्तीर्णं विश्वमयं च—इति त्रिकादि-दर्शनविदः ।

एवम् एकस्यैव चिदात्मनो भगवतः स्वा-तन्त्र्यावभासिताः सर्वा इमा भूमिकाः स्वातन्त्र्य-प्रच्छादनोन्मीलनतारतम्यभेदिताः; अत एक

---

पं० २ ख. ग. पु० अवतिष्ठन्ते इति पाठः ।

पं० ४ क. पु० शून्यान्तविद इति पाठः ।

पं० ५ क. पु० मयं रूपं पश्यति इति पाठः ।

पं० १४ क. ग. पु० दर्शनवादिन इति पाठः ।

एव एतावद्व्याप्तिक आत्मा । मितदृष्टयस्तु अंशांशिकासु तदिच्छयैव अभिमानं ग्राहिताः, येन देहादिषु भूमिषु पूर्वपूर्वप्रमातृव्याप्तिसारताप्रथायामपि उक्तरूपां महाव्याप्तिं परशक्तिपातं विना न लभन्ते । यथोक्तम्

'वैष्णवाद्यास्तु ये केचिद्विद्यारागेण रञ्जिताः ।
न विदन्ति परं देवं सर्वज्ञं ज्ञानशालिनम् ॥'

इति । तथा

'भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया ।'

इति ।

'त आत्मोपासकाः शैवं न गच्छन्ति परं पदम् ॥'

इति च ।

अपि च 'सर्वेषां दर्शनानां'—समस्तानां नीलसुखादिज्ञानानां याः 'स्थितयः'—अन्तर्मुखरूपा विश्रान्तयः ताः 'तद्भूमिकाः'—चिदानन्दघनस्वात्मस्वरूपाभिव्यक्त्युपायाः । तथा हि

---

पं० १ ग. पु० एतद्व्याप्त्या इति पाठः ।
पं० ३ ख. ग. पु० देहादिभूमिषु इति समस्तः पाठः ।
पं० ७ क. पु० सर्वज्ञं ज्ञानशालिनम् इति श्लोकपादो नास्ति ।
पं० ९ क. ग. पु० तन्माया इति पाठः ।
पं० ११ ग. पु० अनात्मोपासका ह्येते इति पाठः ।
पं० १५ ग. पु० चिदानन्दात्मरूपेति पाठः ।

यदा यदा बहिर्मुखं रूपं स्वरूपे विश्राम्यति, तदा तदा बाह्यवस्तूपसंहारः; अन्तःप्रशान्तपदावस्थितिः; तत्तदुदेष्यत्संवित्संतत्यासूत्रणम्;—इति सृष्टि-स्थिति-संहारमेलनारूपा इयं तुरीया संविद्भट्टारिका तत्तत्सृष्ट्यादिभेदान् उद्वमन्ती संहरन्ती च, सदा पूर्णा च, कृशा च, उभयरूपा च, अनुभयात्मा च, अक्रममेव स्फुरन्ती स्थिता । उक्तं च श्रीप्रत्यभिज्ञाटीकायाम्

'तावदर्थावलेहेन उत्तिष्ठति, पूर्णा च भवति'

इति । एषा च भट्टारिका क्रमात्क्रमम् अधिकमनुशील्यमाना स्वात्मसात्करोत्येव भक्तजनम् ॥ ८ ॥

यदि एवंभूतस्य आत्मनो विभूतिः, तत् कथम् अयं मलावृतः अणुः कलादिवलितः संसारी अभिधीयते ?—इत्याह

---

पं० ६ ख. ङ. पु० संपूर्णा चेति पाठः ।

पं० ७ ग. पु० क्रमेणैव स्फुरन्ती इति पाठः ।

पं० ९ ख. पु० अर्थावहेलेन इति, ङ० पु० अर्थावहेलना उत्तिष्ठन्ति इति पाठः । ग. पु० पूर्णा च भविष्यति इति च पाठः ।

## चिद्वत्तच्छक्तिसंकोचात् मलावृतः संसारी ॥ ९ ॥

यदा 'चिदात्मा' परमेश्वरः स्वस्वातन्त्र्यात् अभेदव्याप्तिं निमज्ज्य भेदव्याप्तिम् अवलम्बते, तदा 'तदीया इच्छादिशक्तयः' असंकुचिता अपि 'संकोचवत्यो' भान्ति; तदानीमेव च अयं 'मलावृतः संसारी' भवति । तथा च अप्रतिहतस्वातन्त्र्यरूपा इच्छाशक्तिः संकुचिता सती अपूर्णमन्यतारूपम् आणवं मलम्; ज्ञानशक्तिः क्रमेण संकोचात् भेदे सर्वज्ञत्वस्य किंचिज्ज्ञत्वाप्तेः अन्तःकरण-बुद्धीन्द्रियतापत्ति-पूर्वम् अत्यन्तं संकोचग्रहणेन भिन्नवेद्यप्रथा-रूपं मायीयं मलम्; क्रियाशक्तिः क्रमेण भेदे

---

पं० १ ख. पु० चिद्विभुः शक्तिसंकोचेति पाठः ।
पं० ३ क. ग. पु० स्वातन्त्र्याभेदवृत्तिव्याप्तिम् इति,
पं० ४ ङ. पु० अभेदप्राप्तिम् इति पाठः ।
पं० ५ क. पु० शक्तयः संकुचिता इति पाठः ।
पं० ६ ग. पु० भवन्ति इति पाठः ।
पं० १० क. पु० ज्ञानशक्तिक्रमेण इति पाठः । ख. ग. पु० भेदसर्वज्ञत्व-किंचिज्ज्ञत्वान्तःकरणेत्यादि पाठः ।
पं० १२ क. पु० संकोचग्रहेण इति पाठः ।
पं० १३ क. पु० क्रियाशक्तिक्रमेण इति पाठः ।

सर्वकर्तृत्वस्य किंचित्कर्तृत्वाप्तेः कर्मेन्द्रियरूप-संकोचग्रहणपूर्वम् अत्यन्तं परिमितततां प्राप्ता शुभाशुभानुष्ठानमयं कार्मं मलम् । तथा सर्व-कर्तृत्व-सर्वज्ञत्व-पूर्णत्व-नित्यत्व-व्यापकत्वशक्त-यः संकोचं गृह्णाना यथाक्रमं कला-विद्या-राग-काल-नियतिरूपतया भान्ति । तथाविधश्च अयं शक्तिदरिद्रः संसारी उच्यते; स्वशक्ति-विकासे तु शिव एव ॥ ९ ॥

ननु संसार्यवस्थायाम् अस्य किंचित् शिव-तोचितम् अभिज्ञानमस्ति येन शिव एव तथावस्थितः ?—इत्युद्घोष्यते । अस्ति ।—इत्याह

**तथापि तद्वत् पञ्चकृत्यानि करोति ॥ १० ॥**

इह ईश्वराद्वयदर्शनस्य ब्रह्मवादिभ्यः अय-मेव विशेषः, यत्

'सृष्टिसंहारकर्तारं विलयस्थितिकारकम् ।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ॥'

---

पं० १ ख. ग. पु० भेदसर्वकर्तृत्वकिंचित्कर्तृत्वकर्मेन्द्रियेत्यादि—पाठः ।
पं० १० ङ. पु० शिवतोचितं किञ्चिदभिज्ञानमस्ति ? इति पाठः ।
पं० ११ ख. पु० येन तथावस्थानः शिव एवेत्युद्घोष्यते इति पाठः ।
पं० १५ क. पु० यतः इति पाठः ।

इति श्रीमत्स्वच्छन्दादिशासनोक्तनीत्या सदा पञ्चविधकृत्यकारित्वं चिदात्मनो भगवतः । यथा च भगवान् शुद्धेतराध्वस्फारणक्रमेण स्वरूपविकासरूपाणि सृष्ट्यादीनि करोति, 'तथा' संकुचितचिच्छक्तितया संसारभूमिकायामपि 'पञ्चकृत्यानि' विधत्ते । तथा हि

'तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।
भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ॥'

इति प्रत्यभिज्ञाकारिकोक्तार्थदृष्ट्या देहप्राणादिपदम् आविशन् चिद्रूपो महेश्वरो बहिर्मुखीभावावसरे नीलादिकमर्थं नियतदेशकालादितया यदा आभासयति, तदा नियतदेशकालाद्याभासांशे अस्य स्रष्टृता; अन्यदेशकालाद्याभासांशे अस्य संहर्तृता; नीलाद्याभासांशे स्थापकता; भेदेन आभासांशे विलयकारिता; प्रकाशैक्येन प्रकाशने अनुग्रहीतृता । यथा च

पं० ५ ङ. पु. तथा तथा संकुचच्छक्तितया इति पाठः ।
पं० ९ ग. पु० प्रत्यभिज्ञाकारोक्तदृशा इति पाठः ।
पं० १० ख. ङ. पु० चिद्रूपमहेश्वर इति समस्तः पाठः ।
पं० १३ ख. ङ. पु० 'अस्य' पदं नास्ति ।
पं० १५ क. पु० भेदनांशे इति, ङ. पु० भेदनाभेदांशे इति पाठः ।

सदा पञ्चविधकृत्यकारित्वं भगवतः, तथा मया वितत्य स्पन्दसंदोहे निर्णीतम् ।

एवमिदं पञ्चविधकृत्यकारित्वम् आत्मीयं सदा दृढप्रतिपत्त्या परिशील्यमानं माहेश्वर्यम् उन्मीलयत्येव भक्तिभाजाम् । अत एव ये सदा एतत् परिशीलयन्ति, ते स्वरूपविकासमयं विश्वं जानाना जीवन्मुक्ता—इत्याम्नाताः । ये तु न तथा, ते सर्वतो विभिन्नं मेयजातं पश्यन्तो बद्धात्मानः ॥ १० ॥

न च अयमेव प्रकारः पञ्चविधकृत्यकारित्वे, यावत् अन्योऽपि कश्चित् रहस्यरूपोऽस्ति ।—इत्याह

**आभासन-रक्ति-विमर्शन-बीजावस्थापन-विलापनतस्तानि ॥ ११ ॥**

'पञ्चविधकृत्यानि करोति'—इति पूर्वतः सं-

पं० ३ ख. ङ. पु० पञ्चकृत्येति पाठः ।

पं० ४ ख. पु० माहेश्वर्यमेवोन्मीलयेत् इति पाठः ।

पं० ६ क. पु० सदैव तत् इति, ग. पु० सदैवैतत्परिशीलयन्त इति पाठः ।

पं० १० क. ग ङ० पञ्चकृत्यकारित्वे इति पाठः ।

पं० ११ क. पु० अन्यदपि किंचिद्रहस्यरूपमस्तीति पाठः ।

पं० १३ क० पु० आभासमान इति, क. ग. ङ. पु० बीजावस्थानतद्विलापनेति पाठः ।

पं० १५ क.ग.ङ. पु० पञ्चकृत्यानि इति, क. ग. पु० पूर्वेण संबन्ध इति च पाठः ।

बध्यते। श्रीमन्महार्थदृष्ट्या दृगादिदेवीप्रसरण-क्रमेण यत् यत् आभाति, तत् तत् सृज्यते; तथा सृष्टे पदे तत्र यदा प्रशान्तनिमेषं कंचित् कालं रज्यति, तदा स्थितिदेव्या तत् स्थाप्यते; चमत्कारापरपर्यायविमर्शनसमये तु संह्रियते । यथोक्तं श्रीरामेण

'समाधिवज्रेणाप्यन्यैरभेद्यो भेदभूधरः ।
परामृष्टश्च नष्टश्च त्वद्भक्तिबलशालिभिः ॥'

इति । यदा तु संह्रियमाणमपि एतत् अन्तः विचित्राशङ्कादिसंस्कारम् आधत्ते, तदा तत् पुनः उद्भविष्यत्संसारबीजभावमापन्नं विलय-पदम् अध्यारोपितम् । यदा पुनः तत् तथा अन्तः स्थापितम् अन्यत् वा अनुभूयमानमेव हठपाकक्रमेण अलंग्रासयुक्त्या चिदग्निसाद्भा-वम् आपद्यते, तदा पूर्णतापादनेन अनुगृह्यते एव । ईदृशं च पञ्चविधकृत्यकारित्वं स-

---

पं॰ १ क. पु॰ महादृगादिदेवीप्रसरणक्रमेणेति पाठः ।
पं॰ ३ ङ. पु॰ 'पदे' इति पदं नास्ति ।
पं॰ ५ ख. ङ. पु॰ विमर्शसमये इति पाठः ।
पं॰ ८ क. पु॰ भक्तिभरशालिभिरिति पाठः ।
पं॰ १२ क. पु॰ पुनस्तदन्तस्तथा स्थापितमन्यदा इति पाठः ।
पं॰ १६ ग. पु॰ ईदृशपञ्चकृत्यकारिता सदा संनिहितापि इति पाठः ।

र्वस्य सदा संनिहितमपि सद्गुरूपदेशं विना न प्रकाशते, इति सद्गुरुसपर्यैव एतत्प्रथार्थम् अनुसर्तव्या ॥ ११ ॥

यस्य पुनः सद्गुरूपदेशं विना एतत्परिज्ञानं नास्ति,तस्य अवच्छादितस्वस्वरूपाभिः निजाभिः शक्तिभिः व्यामोहितत्वं भवति ।—इत्याह

तदपरिज्ञाने स्वशक्तिभिर्व्यामोहितता संसारित्वम् ॥ १२॥

'तस्य' एतस्य सदा संभवतः पञ्चविधकृत्यकारित्वस्य 'अपरिज्ञाने'—शक्तिपातहेतुकस्वबलोन्मीलनाभावात् अप्रकाशने 'स्वाभिः शक्तिभिः व्यामोहितत्वं'—विविधलौकिकशास्त्रीयशङ्काशङ्कुकीलितत्वं यत्, इदमेव 'संसारित्वम्'। तदुक्तं श्रीसर्ववीरभट्टारके

---

पं० २ क. पु० सद्गुरूपसर्यैवेति; अनुमन्तव्येति च पाठः ।

पं० ५ क. पु० तस्य छादितस्वरूपाभिः इति पाठः; निजाभिः इति पदं ङ. पुस्तकादुपक्षिप्तम् ।

पं० ६ ग. पु० शक्तिव्यामोहितत्वं संसारित्वमित्याहेति पाठः ।

पं० ७ ख. पु० स्वशक्तिव्यामोहितता इति, ङ. पु० शक्तिव्यामोहितत्वम् इति पाठः ।

पं० ९ क. ग. पु० तदा इति पाठः ।

'अज्ञानाच्छङ्कते लोकस्ततः सृष्टिश्च संहृतिः ॥'

इति ।

'मन्त्रा वर्णात्मकाः सर्वे सर्वे वर्णाः शिवात्मकाः ॥'

इति च । तथा हि—चित्प्रकाशात् अव्यतिरिक्ता नित्योदितमहामन्त्ररूपा पूर्णाहंविमर्शमयी या इयं परा वाक्शक्तिः आदि-क्षान्तरूपाशेषशक्तिचक्रगर्भिणी, सा तावत् पश्यन्तीमध्यमादिक्रमेण ग्राहकभूमिकां भासयति । तत्र च परारूपत्वेन स्वरूपम् अप्रथयन्ती मायाप्रमातुः अस्फुटासाधारणार्थावभासरूपां प्रतिक्षणं नवनवां विकल्पक्रियामुल्लासयति, शुद्धामपि च अविकल्पभूमिं तदाच्छादितामेव दर्शयति । तत्र च ब्राह्म्यादिदेवताधिष्ठितककारादिविचित्रशक्तिभिः व्यामोहितो देहप्राणादिमेव परिमितम् अवशम् आत्मानं मन्यते मूढजनः । ब्राह्म्यादिदेव्यः पशुदशायां भेद-

पं० ३ क. ग. पु० मन्त्राः शिवात्मका इति पाठः ।

पं० ५ क. ग. पु० नित्योदितमन्त्ररूपा इति पाठः ।

पं० ६ क. पु० आदिक्षान्तशेषशक्तीति पाठः ।

पं० ८ ख. ङ. पु० मध्यमादिग्राहकेति पाठः ।

पं० ९ क० पु० स्वरूपं प्रथयन्तीति पाठः ।

पं० १० क. ग. पु० अर्थाभासां प्रतिक्षणे इति पाठः ।

पं० १४ ख. ङ. पु० शक्तिव्यामोहित इति पाठः ।

विषये सृष्टिस्थिती, अभेदविषये च संहारं प्रथयन्त्यः, परिमितविकल्पपात्रतामेव संपादयन्ति; पतिदशायां तु भेदे संहारम्, अभेदे च सर्गस्थिती प्रकटयन्त्यः, क्रमात्क्रमं विकल्पनिर्ह्रासनेन श्रीमद्भैरवमुद्रानुप्रवेशमयीं महतीम् अविकल्पभूमिमेव उन्मीलयन्ति ।

'[12]सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥'

इत्यादिरूपां चिदानन्दावेशमग्नां शुद्धविकल्पशक्तिम् उल्लासयन्ति । ततः उक्तनीत्या स्वशक्तिव्यामोहिततैव संसारित्वम् ।

किंच चितिशक्तिरेव भगवती विश्ववमनात्

---

१२ विज्ञानभैरवेपि
'सर्वज्ञः सर्वकर्ता च व्यापकः परमेश्वरः ।
स एवाहं शैवधर्म इति दार्ढ्याच्छिवो भवेत् ॥'
इति ।

---

पं० २ क. पु० प्रयान्त्य इति पाठः ।
पं० ४ क. पु० विकल्पह्रासेन इति पाठः ।
पं० ७ क. ग. पु० इत्येवं परीत्यादि-पादत्रयहीनः पाठः ।
पं० ९ क. ग. पु० नन्दावेशसाराम् इति, अशुद्धां विकल्पशक्तिमिति च, ख. पु० शुद्धविकल्पां शक्तिम्, शुद्धामविकल्पेति पाठान्तरयुक्तः पाठः ।
पं० ११ क. पु० शक्तिभिर्व्यामोहितत्वम् इति पाठः ।
पं० १२ क. पु० विश्वावसाननात् इति पाठः ।

संसारवामाचारत्वाच्च वामेश्वर्याख्या सती, खेचरी-गोचरी-दिक्चरी-भूचरीरूपैः अशेषैः प्रमातृ-अन्तःकरण-बहिष्करण-भावस्वभावैः परिस्फुरन्ती, पशुभूमिकायां शून्यपदविश्रान्ता किंचित्कर्तृत्वाद्यात्मक-कलादिशक्त्यात्मना खेचरीचक्रेण गोपितपारमार्थिकचिद्गगनचरीत्वस्वरूपेण चकास्ति; भेदनिश्चयाभिमान-विकल्पनप्रधानान्तःकरणदेवीरूपेण गोचरीचक्रेण गोपिताभेदनिश्चयाद्यात्मकपारमार्थिकस्वरूपेण प्रकाशते; भेदालोचनादिप्रधानबहिष्करणदेवतात्मना च दिक्चरीचक्रेण गोपिताभेदप्रथात्मकपारमार्थिकस्वरूपेण स्फुरति; सर्वतो व्यवच्छिन्नाभासस्वभावप्रमेयात्मना च भूचरीचक्रेण गोपितसार्वात्म्यस्वरूपेण पशुहृदयव्यामोहिना भाति । पतिभूमिकायां तु सर्व-

---

पं० ३ क. पु० बहिष्करणभावैरिति, ख. पु० बहिष्करणभावाभावस्वभावैरिति पाठः ।

पं० ४ क. पु० विश्रान्ताकिंचित् इति पाठः ।

पं० ५ ख.पु० खेचरीक्रमेण इति, ग. पु० खेचरीत्वक्रमेणेति पाठः ।

पं० ६ क. पु० गगनचरीत्वक्रमेण इति पाठः ।

पं० १० क. ग. पु० प्रधानताबहिष्करणेति पाठः ।

पं० १४ ख० पु० सर्वात्मस्वरूपेणेति पाठः ।

कर्तृत्वादिशक्त्यात्मकचिद्गगनचरीत्वेन, अभेद-निश्चयाद्यात्मना गोचरीत्वेन, अभेदालोचनाद्यात्मना दिक्चरीत्वेन, स्वाङ्गकल्पाद्वयप्रथासारप्रमेयात्मना च भूचरीत्वेन पतिहृदयविकासिना स्फुरति । तथा च उक्तं सहजचमत्कारपरिजनिताकृतकादरेण भट्टदामोदरेण विमुक्तकेषु

'पूर्णावच्छिन्नमात्रन्तर्बहिष्करणभावगाः ।
वामेशाद्याः परिज्ञानाज्ज्ञानात्स्युर्मुक्तिबन्धदाः ॥'

इति । एवं च निजशक्तिव्यामोहिततैव संसारित्वम् ।

अपि च चिदात्मनः परमेश्वरस्य स्वा अनपायिनी एकैव स्फुरत्तासारकर्तृतात्मा ऐश्वर्यशक्तिः । सा यदा स्वरूपं गोपयित्वा पाशवे पदे

---

पं० ४ क. पु० पतिहृदये विकासिता इति पाठः ।

पं० ५ तथा चेत्यारभ्य मुक्तिबन्धदा इत्यन्तः पाठः क. ग. पु० नास्ति, उपन्यस्तश्चात्र ख. ङ. पुस्तकाभ्यां, तत्र ङ. पु० पूर्णाविच्छिन्नमात्रास्तु इति पाठः ।

पं० १२ क. ग. पु० सानपायिनीति पाठः ।

पं० १३ क. पु० स्फुरणसारा कर्तृता आत्मैश्वर्यशक्तिरिति पाठः ।

पं० १४ ख. पु० गूहयित्वा इति पाठः ।

प्राणापान-समान-शक्तिदशाभिः जाग्रत्स्वप्न-सुषुप्तभूमिभिः[13] देह-प्राण-पुर्यष्टककलाभिश्च व्यामोहयति, तदा तद्व्यामोहितता संसारित्वम्; यदा तु मध्यधामोल्लासाम् उदानशक्तिं, विश्वव्याप्तिसारां च व्यानशक्तिं, तुर्यदशारूपां तुर्यातीतदशारूपां च चिदानन्दघनाम् उन्मीलयति, तदा देहाद्यवस्थायामपि पतिदशात्मा जीवन्मुक्तिर्भवति । एवं त्रिधा स्वशक्तिव्यामोहितता व्याख्याता । 'चिद्वत्' इति (९) सूत्रे चित्प्रकाशो गृहीतसंकोचः संसारी इत्युक्तम्, इह तु स्वशक्तिव्यामोहितत्वेन अस्य संसारित्वं भवति,—इति भङ्ग्यन्तरेण उक्तम् । एवं संकुचितशक्तिः प्राणादिमानपि यदा स्वशक्तिव्यामोहितो न भवति, तदा अयम्

---

१३ आत्मा मनसा, मन इन्द्रियेण, इन्द्रियमर्थेन संयुज्यते इति चतुष्टयसंनिकर्षः जाग्रदवस्था । आत्मा मनसा, मनो विषयेण इति त्रितयसंनिकर्षः स्वप्नावस्था । आत्मा विषयेण इति द्वयोः संनिकर्षः सुषुप्तिः । केवलात्मसंनिकर्षः तुर्या । निस्तरङ्गमहोदधिकल्पावस्थानं तु तुर्यातीतावस्था इति ।

---

पं० ३ क. पु० तदा व्यामोहता संसारीति पाठः ।

पं० ४ क. पु० धामोल्लासात् उदानशक्तिव्याप्तिसारां व्यानेति, ख. पु० उदानशक्तिं व्याप्तीति विश्वपदहीनः पाठः ।

'..................शरीरी परमेश्वरः ।'

इत्याम्नायस्थित्या शिवभट्टारक एव,—इति भङ्गया निरूपितं भवति । यदागमः

'मनुष्यदेहमास्थाय छन्नास्ते परमेश्वराः ।'

इति । उक्तं च प्रत्यभिज्ञाटीकायाम्

'शरीरमेव घटाद्यपि वा ये षट्त्रिंशत्तत्त्वमयं शिवरूपतया पश्यन्ति तेऽपि सिध्यन्ति'

इति ॥ १२ ॥

उक्तसूत्रार्थप्रातिपक्ष्येण तत्त्वदृष्टिं दर्शयितुमाह

**तत्परिज्ञाने चित्तमेव अन्तर्मुखीभावेन चेतनपदाध्यारोहात् चितिः॥१३॥**

पूर्वसूत्रव्याख्याप्रसङ्गेन प्रमेयदृष्ट्या वितत्य

---

पं० १ क. पु० परमेश्वर एवेति 'एव' पदाधिकः पाठः ।

पं० ६ क. पु० शरीरमेव ये षट्त्रिंशत्तत्त्वमयं शिवरूपतया पश्यन्ति अर्चयन्ति च तेपि सिध्यन्ति, घटादिकमपि तथाभिनिविशन्ति तेपि इति नास्त्यत्र विवाद इत्युक्तसूत्रार्थेति पाठः ।

पं० ११ क. ग. पु० अन्तर्मुखीभावे चेतनेति पाठः ।

पं० १२ ख. पु० पदाध्यारोपात् इति पाठः ।

पं० १४ क.पु० दृष्ट्या विततप्रायमेतत् शब्दसंगत्या व्याक्रियते इति पाठः।

व्याख्यातप्रायमेतत् सूत्रम्; शब्दसंगत्या तु अधुना व्याख्यायते । 'तस्य' आत्मीयस्य पञ्च-कृत्यकारित्वस्य 'परिज्ञाने' सति अपरिज्ञानलक्ष-णकारणापगमात् स्वशक्तिव्यामोहितताविनिवृत्तौ स्वातन्त्र्यलाभात् प्राक् व्याख्यातं यत् 'चित्तं' तदेव संकोचिनीं बहिर्मुखतां जहत्, 'अन्तर्मु-खीभावेन चेतनपदाध्यारोहात्,—ग्राहकभूमिका-क्रमणक्रमेण संकोचकलाया अपि विगलनेन स्वरूपापत्त्या 'चितिर्' भवति; [१४] स्वां चिन्मयीं परां भूमिमाविशति इत्यर्थः ॥ १३ ॥

ननु यदि पारमार्थिकं चिच्छक्तिपदं सक-लभेदकवलनस्वभावं, तत् अस्य मायापदेऽपि तथारूपेण भवितव्यं यथा जलदाच्छादित-

---

१४ तथा चोक्तम्

'स पुनः शाम्भवेच्छातः शिवाभेदं परामृशन् ।
क्रमान्मन्त्रेश-तन्त्रेतृरूपो याति शिवात्मताम् ॥'

इति ।

---

पं० ४ क. ग. पु० करणापगमादिति पाठः ।
पं० ५ क. पु० स्वातन्त्र्यालाभादिति पाठः ।
पं० ६ क. पु० संकोचिनी बहिर्मुखता इति पाठः ।
पं० ८ ग. पु० विगलने इति सप्तमीनिर्दिष्टः पाठः ।
पं० ९ क. पु० पराभूमिम् इति समस्तः पाठः ।

स्यापि भानोः भावावभासकत्वम् ।—इत्याशङ्क्य आह

चितिवह्निरवरोहपदे छन्नोऽपि मात्रया मेयेन्धनं प्लुष्यति ॥ १४ ॥

'चितिरेव' विश्वग्रसनशीलत्वात् 'वह्निः;' असौ एव 'अवरोहपदे'—मायाप्रमातृतायां 'छन्नोऽपि'—स्वातन्त्र्यात् आच्छादितस्वभावोऽपि, भूरिभूतिच्छन्नाग्निवत् 'मात्रया'—अंशेन, नीलपीतादिप्रमेयेन्धनं 'प्लुष्यति'—स्वात्मसात् करोति । मात्रापदस्य इदम् आकूतम्—यत् कवलयन् अपि सार्वात्म्येन न ग्रसते, अपि तु अंशेन संस्कारात्मना उत्थापयति । ग्रासकत्वं च सर्वप्रमातृणां स्वानुभवत एव सिद्धम् । यदुक्तं श्रीमदुत्पलदेवपादैः निजस्तोत्रेषु

---

पं० ६ क. ग. पु० चितिरेव ग्रसनेति विश्वपदहीनः, असावारोहिपदे इति च पाठः ।

पं० ९ ख. ङ. पु० मात्रयाप्यचेतनया नीलेति, क. पु० पीतादिमेयमेवेन्धनमिति पाठः ।

पं० १२ ग. पु० सर्वात्मकत्वेनेति पाठः । क. ग. पु० संस्कारात्मकं तत्स्थापयतीति च पाठः ।

'वर्तन्ते जन्तवोऽशेषा अपि ब्रह्मेन्द्रविष्णवः ।
ग्रसमानास्ततो वन्दे देव विश्वं भवन्मयम् ॥'

इति ॥ १४ ॥

यदा पुनः करणेश्वरीप्रसरसंकोचं संपाद्य सर्गसंहारक्रमपरिशीलनयुक्तिम् आविशति तदा

## बललाभे विश्वमात्मसात्करोति ॥ १५ ॥

चितिरेव देहप्राणाद्याच्छादननिमज्जनेन स्वरूपम् उन्मग्नत्वेन स्फारयन्ती बलम्; यथोक्तं

'तदाक्रम्य बलं मन्त्राः................ ।

इति । एवं च 'बललाभे'–उन्मग्नस्वरूपाश्रयणे, क्षित्यादि-सदाशिवान्तं 'विश्वम् आत्मसात् करोति'–स्वस्वरूपाभेदेन निर्भासयति । तदुक्तं पूर्वगुरुभिः स्वभाषामयेषु क्रमसूत्रेषु

'यथा वह्निरुद्बोधितो दाह्यं दहति, तथा विषयपाशान् भक्षयेत्'

इति ।

---

पं० ५ क. पु० सर्वसंहारेति पाठः ।

पं० ११ क. पु० तन्मज्जनस्वरूपाश्रयेणेति, ग. पु० श्रयत्वेनेति पाठः ।

पं० १३ ग. पु० यथोक्तमिति पाठः ।

'न चैवं वक्तव्यम्,—विश्वात्मसात्काररूपा समावेशभूः कादाचित्की, कथम् उपादेया इयं स्यात् इति; यतो देहाद्युन्मज्जननिमज्जनवशेन इदम् अस्याः कादाचित्कत्वम् इव आभाति । वस्तुतस्तु चितिस्वातन्त्र्यावभासितदेहाद्युन्मज्जनात् एव कादाचित्कत्वम् । एषा तु सदैव प्रकाशमाना; अन्यथा तत् देहादि अपि न प्रकाशेत । अत एव देहादिप्रमातृताभिमाननिमज्जनाय अभ्यासः, न तु सदा प्रथमानतासारप्रमातृताप्राप्त्यर्थम्'

इति श्रीप्रत्यभिज्ञाकाराः ॥ १५ ॥

एवं च

## चिदानन्दलाभे देहादिषु चेत्यमानेष्वपि चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्तिः ॥ १६ ॥

विश्वात्मसात्कारात्मनि समावेशरूपे 'चिदानन्दे लब्धे' व्युत्थानदशायां दलकल्पतया देहप्राणनीलसुखादिषु आभासमानेषु अपि,

पं० १ ख. पु० विश्वात्मसाक्षात्कारेति पाठः ।
पं० २ क. ङ.पु० उपादेयमिति, ख. पु० उपादेया स्यादिति पाठः ।
पं० ४ क. ग. पु० स्वातन्त्र्यावभासितं देहेत्यादि, पाठः ।
पं० ५ ख. ङ. पु० उन्मज्जनादि एवेति पाठः ।
पं० ७ ङ. पु० निमज्जनया अभ्यास इति पाठः ।
पं० ८ ग. पु० सारपरप्रमातृता इति पाठः ।
पं० १२ ख. पु० देहादिष्वपि चेत्येति पाठः ।

यत्समावेशसंस्कारबलात् प्रतिपादयिष्यमाण-युक्तिक्रमोपबृंहितात् 'चिदैकात्म्यप्रतिपत्तिदार्ढ्यम्'—अविचला चिदेकत्वप्रथा, सैव 'जीवन्मुक्तिः'—जीवतः प्राणान् अपि धारयतो मुक्तिः; प्रत्यभिज्ञातनिजस्वरूपविद्रावितोशेषपाशराशित्वात् । यथोक्तं स्पन्दशास्त्रे

> 'इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
> स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥'

इति ॥ १६ ॥

अथ कथं चिदानन्दलाभो भवति ?—इत्याह

## मध्यविकासाच्चिदानन्द-लाभः ॥ १७ ॥

सर्वान्तरतमत्वेन वर्तमानत्वात् तद्भित्तिलग्नतां विना च कस्यचित् अपि स्वरूपानुपपत्तेः संविदेव भगवती 'मध्यम्'। सा तु मायादशायां तथाभूतापि स्वरूपं गूहयित्वा

---

पं० २ ख. ङ. पु० मुक्तिक्रमेणेति पाठः ।
पं० ३ ग. पु० अविचलच्चिदेकत्वेन या प्रथा इति पाठः ।
पं० ४ ख. ङ. पु० मुक्तिः निजस्वरूपविद्रावितेति, पाठः ।
पं० ५ क. पु० रूपे विद्रावितेति पाठः ।
पं० ८ क. पु० संपश्यन् इति पाठः ।
पं० १४ ग. पु० स्वात्मत्वानुपपत्तेः इति पाठः ।
पं० १६ ग. पु० स्वात्मस्वरूपमिति पाठः ।

'प्राक् संवित्प्राणे परिणता'

इति नीत्या प्राणशक्तिभूमिं[१५] स्वीकृत्य, अवरोहक्रमेण बुद्धिदेहादिभुवम् अधिशयाना, नाडीसहस्रसरणिम् अनुसृता । तत्रापि च पलाशपर्णमध्यशाखान्यायेन आ ब्रह्मरन्ध्रात् अधोवक्रपर्यन्तं प्राणशक्तिब्रह्माश्रयमध्यमनाडीरूपतया प्राधान्येन स्थिता; तत एव सर्ववृत्तीनाम् उदयात्, तत्रैव च विश्रामात् । एवंभूतापि एषा पशूनां[१६] निमीलितस्वरूपैव स्थिता ।

---

१५ यथा सर्ववाहनसंपत्समृद्धोपि राजा स्वेच्छया पद्भ्यां गच्छति, तथेयं संविद्भगवत्यपि स्वेच्छया परिमितप्रमात्रात्मदेहादिभूमिं स्वीकुरुते इति भावः ।

१६ पशवः अविज्ञातपरतत्त्वाः । तथा च

'अविज्ञाते परे तत्त्वे योगाभ्यासो हि निष्फलः ।
विज्ञाते च परे तत्त्वे योगाभ्यासो हि निष्फलः ॥'

इति ।

---

पं० ३ ख. पु० नानानाडीति पाठः ।

पं० ६ क. पु० प्राणशक्तिर्ब्रह्माश्रयमध्यनाडीरूपत्वेनेति, ख. पु० प्राणब्रह्माश्रयेण मध्यमब्रह्मनाडीरूपतयेति, ग. पु० ब्रह्माशयेति पाठः ।

पं० ७ ख. पु० सर्वचित्तवृत्तीनामिति, ङ. पु० सर्ववृत्तीनां प्रलयात् इति पाठः ।

पं० ८ क. पु० विश्रमणादिति पाठः ।

पं० ९ ख. पु० स्वरूपावस्थितेति पाठः ।

यदा तु उक्तयुक्तिक्रमेण सर्वान्तरतमत्वे मध्यभूता संविद्भगवती विकसति, यदि वा वक्ष्यमाणक्रमेण मध्यभूता ब्रह्मनाडी विकसति, तदा 'तद्विकासात् चिदानन्दस्य' उक्तरूपस्य 'लाभः'—प्राप्तिर्भवति । ततश्च प्रागुक्ता जीवन्मुक्तिः ॥ १७ ॥

मध्यविकासे युक्तिमाह

**विकल्पक्षय-शक्तिसंकोचविकास-**
**वाहच्छेदाद्यन्तकोटिनिभाल-**
**नादय इहोपायाः ॥ १८ ॥**

'इह' मध्यशक्तिविकासे 'विकल्पक्षयादय उपायाः' । प्रागुपदिष्टपञ्चविधकृत्यकारित्वाद्यनुसरणेन सर्वमध्यभूतायाः संविदो विकासो जायते—इति अभिहितप्रायम् । उपायान्तरम् अपि तु उच्यते;—प्राणायाम-मुद्राबन्धादिसम-

---

पं० १ ख. ङ. पु० तमत्वेन संभूता इति पाठः ।
पं० ३ ख. पु० मध्या ब्रह्मनाडीति पाठः ।
पं० ७ ख. ङ. पु० विकासे जीवन्मुक्तियुक्तिमिति पाठः ।
पं० १० ख. पु० दयो ह्युपाया इति, क. पु० उपाय इत्येकवचनान्तः पाठः।
पं० ११ ख. पु० सूत्रादनन्तरम्, 'प्राणावारोहारोहच्छेदा विकल्पक्षयादय' इति पाठः ।

स्तयन्त्रणातन्त्रत्रोटनेन सुखोपायमेव, हृदये निहितचित्तः, उक्तयुक्त्या स्वस्थितिप्रतिबन्धकं विकल्पम् अकिंचिच्चिन्तकत्वेन प्रशमयन्, अविकल्पपरामर्शेन देहाद्यकलुषस्वचित्प्रमातृतानिभालनप्रवणः, अचिरादेव उन्मिषद्विकासां तुर्य-तुर्यातीतसमावेशदशाम् आसादयति । यथोक्तम्

'विकल्पहानेनैकाग्र्यात्क्रमेणेश्वरतापदम् ।'

इति श्रीप्रत्यभिज्ञायाम् । श्रीस्पन्देऽपि

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥'

इति । श्रीज्ञानगर्भेऽपि

'विहाय सकलाः क्रिया जननि मानसीः सर्वतो
विमुक्तकरणक्रियानुसृतिपारतन्त्र्योज्ज्वलम् ।
स्थितैस्त्वदनुभावतः सपदि वेद्यते सा परा
दशा नृभिरतन्द्रितासमसुखामृतस्यन्दिनी ॥'

इति । अयं च उपायो मूर्धन्यत्वात् प्रत्यभिज्ञायां

---

पं० १ ख.पु०समस्तयन्त्रत्रोटनेनेति ख.पु० हृदयनिहितेति च समस्तः, पाठः ।

पं० २ ग. पु० संनिहितेति, क. पु० प्रतिबन्धनात् इति च पाठः ।

पं० १४ ख. पु० स्थितस्त्वदनुभावेति पाठः ।

पं० १५ ख. पु० तन्द्रिता शमसुखेति पाठः ।

पं० १६ क. पु० मूर्धत्वादिति पाठः ।

प्रतिपादितत्वात् आदौ उक्तः। शक्तिसंकोचाद-यस्तु यद्यपि प्रत्यभिज्ञायां न प्रतिपादिताः, तथापि आम्नायिकत्वात् अस्माभिः प्रसङ्गात् प्रदर्श्यन्ते; बहुषु[17] हि प्रदर्शितेषु कश्चित् केनचित् प्रवेक्ष्यति इति।

'शक्तेः संकोच'—इन्द्रियद्वारेण प्रसरन्त्या एव आकुञ्चनक्रमेण उन्मुखीकरणम्। यथो-क्तम् आथर्वणिकोपनिषत्सु कठवल्ल्यां चतुर्थ-वल्लीप्रथममन्त्रे

'पराञ्चि खानि व्यतृणत्स्वयंभू-
स्तस्मात्पराङ्पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्षद्
आवृत्तचक्षुरमृतत्वमश्नन् ॥'

इति। प्रसृताया अपि वा कूर्माङ्गसंकोचवत् त्रासमये हृत्प्रवेशवच्च सर्वतो निवर्तनम्। यथोक्तम्

१७ उपायेषु।

पं० १ ख. पु० शक्तिसंकोचः, प्रतिपादितः, प्रदर्श्यते इत्येतेषामेकवचनत्वे-नैव पाठः।
पं० ४ क. पु० कः केन प्रविशेत् इति पाठः।
पं० १२ क. पु० कश्चिद्धीमान् इति, व्यावृत्तचक्षुरिति, च पाठः। सर्वेषु मूलोपनिषदपुस्तकेषु मुद्रितेषु 'अमृतत्वमिच्छन्' इति पाठः संदृश्यते।

'तदपोद्धृते नित्योदितस्थितिः ।'

इति ।

'शक्तेर्विकासः' अन्तर्निगूढाया अक्रममेव सकलकरणचक्रविस्फारणेन

'अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।'

इति । भैरवीर्यमुद्रानुप्रवेशयुक्त्या बहिः प्रसरणम् । यथोक्तं कक्ष्यास्तोत्रे

'सर्वाः शक्तीश्चेतसा दर्शनाद्याः
स्वे स्वे वेद्ये यौगपद्येन विष्वक् ।
क्षिप्त्वा मध्ये हाटकस्तम्भभूत-
स्तिष्ठन्विश्वाधार एकोऽवभासि ॥'

इति । श्रीभट्टकल्लटेनापि उक्तम्

---

१८ भैरवीयमुद्रा खेचरीमुद्रा । तल्लक्षणं च यथा

'मनः स्थिरं यस्य विनावलम्बनं
वायुः स्थिरो यस्य विनावरोधनम् ।
दृष्टिः स्थिरा यस्य विनावलोकनं
स्यात्सैव मुद्रा विमला च खेचरी ॥'

इति ।

---

पं० १ क. ग. पु० नित्यस्थितिरिति पाठः ।

पं० ३ क. पु० विकासोन्तर्विमूढाया अपि क्रममेव इति, ग. पु० विकासो मूढाया इति पाठः ।

पं० ९ ख. ङ. पु० सम्यक् इति पाठः ।

पं० ११ क. ग. पु० विश्वाकार इति पाठः ।

'रूपादिषु परिणामात् तत्सिद्धिः ।'

इति । शक्तेश्च संकोचविकासौ, नासापुटस्पन्दनक्रमोन्मिषत्सूक्ष्मप्राणशक्त्या भ्रूभेदनेन क्रमासादितोर्ध्वकुण्डलिनीपदे प्रसरविश्रान्तिदशापरिशीलनम्; अधःकुण्डलिन्यां च षष्ठवक्त्ररूपायां प्रगुणीकृत्य शक्तिं, तन्मूल-तदग्र-तन्मध्यभूमिस्पर्शावेशः । यथोक्तं विज्ञानभट्टारके

'वह्नेर्विषस्य मध्ये तु चित्तं सुखमयं क्षिपेत् ।
केवलं वायुपूर्णं वा स्मरानन्देन युज्यते ॥'

इति । अत्र वह्निः अनुप्रवेशक्रमेण संकोचभूः, विषस्थानम् प्रसरयुक्त्या विकासपदम्, 'विष्लृ व्याप्तौ' इति अर्थानुगमात् ।

---

१९ षष्ठवक्त्रात्मनः शक्तेर्मूलभूर्वह्निः संकोचहेतुत्वात्, प्रसरणात्मव्याप्तिहेतुर्विषं, तयोर्मध्ये सृष्टिग्रन्थौ मध्यनाड्यात्मनि, केवलमारोहावरोहविषयसंबन्धरहितं वायुपूर्णे वा मध्यनाडीस्थिताक्रमोच्चारानच्ककलात्मकप्राणभरितम् ईदृशं सुखमयं ह्लादात्मकं चित्तं भावनया क्षिपेत्, ततः स्मरानन्देन युक्तो भवति सर्वविषयविस्मारकारणत्वात्कामानन्दस्य आनन्दान्तरेभ्यः परत्वात् इति ।

---

पं० २ क. पु० विकास इत्येकवचनपाठः ।
पं० ३ ख. पु० स्वाभेदेन क्रमेति, ग. पु० भ्रूभेदसमासादिता इति पाठः ।
पं० ६ ख. पु० षष्ठचक्ररूपाम् इति, ग. पु० वक्त्ररूपायामिति पाठः ।
पं० ११ ख. पु० प्रसरन्त्या विकासेति पाठः ।
पं० १२ ख. पु० अर्थावगमात् इति पाठः ।

'वाहयोः'—वामदक्षिणगतयोः प्राणापानयोः 'छेदो'—हृदयविश्रान्तिपुरःसरम् अन्तः ककार-हकारादिप्रायानच्कवर्णोच्चारेण विच्छेदनम् । यथोक्तं ज्ञानगर्भे

'अनच्ककक्कृतायतिप्रसृतपार्श्वनाडीद्वय-
च्छिदो विधृतचेतसो हृदयपङ्कजस्योदरे ।
उदेति तव दारितान्धतमसः स विद्याङ्कुरो
य एष परमेशतां जनयितुं पशोरप्यलम् ॥'

इति ।

'आदिकोटिः' हृदयम्, 'अन्तकोटिः' द्वादशान्तः; तयोः प्राणोल्लासविश्रान्त्यवसरे 'निभालनं'—चित्तनिवेशनेन परिशीलनम् । यथोक्तं विज्ञानभैरवे

'हृद्याकाशे निलीनाक्षः पद्मसंपुटमध्यगः ।
अनन्यचेताः सुभगे परं सौभाग्यमाप्नुयात् ॥'

इति । तथा

'यथा तथा यत्र तत्र द्वादशान्ते मनः क्षिपेत् ।
प्रतिक्षणं क्षीणवृत्तेर्वैलक्षण्यं दिनैर्भवेत् ॥'

---

पं० १ ग. पु० वामदक्षिणगत्योरिति पाठः ।

पं० ३ क. पु० प्रायेणानच्कोच्चारेणेति, ख. पु. अनच्कवर्णोच्चारणे इति पाठः ।

पं० १२ क. पु० चितिनिवेशनेनेति पाठः ।

पं० १८ क. पु० वैलक्ष्यं दिनशो भवेदिति, ख. पु० वैलक्षण्यं क्षणैर्भवेत् इति पाठः ।

इति । आदिपदात् उन्मेषदशानिषेवणम् । यथोक्तम्

'उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥'

इति स्पन्दे । तथा रमणीयविषयचर्वणादयश्च संगृहीताः । यथोक्तं श्रीविज्ञानभैरवे एव

'जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां महानन्दमयो भवेत् ॥
गीतादिविषयास्वादासमसौख्यैकतात्मनः ।
योगिनस्तन्मयत्वेन मनोरूढेस्तदात्मता ॥
यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥'

इति । एवमन्यदपि आनन्दपूर्णस्वात्मभावनादिकम् अनुमन्तव्यम् । इत्येवमादयः अत्र मध्यविकासे उपायाः ॥ १८ ॥

मध्यविकासाच्चिदानन्दलाभः, स एव च परमयोगिनः समावेशसमापत्त्यादिपर्यायः समाधिः, तस्य नित्योदितत्वे युक्तिमाह

---

पं० १ ख. ङ. पु० दशापरिशीलनं विशेषेणेति पाठः ।

पं० ७ ख. ङ. पु० भैरवावस्थाम् इति क. पु० सदानन्दस्ततो भवेदिति, ग. पु० महानन्दोदय इति, मूले तु महानन्दस्ततो भवेदिति पाठः ।

पं० ८ क. पु० विषयास्वादात्समसौख्येति पाठः ।

पं० ९ क. ग. पु० मनोरूढ्या तदेति पाठः ।

पं० १० ख. पु० तुष्टिस्तत्र तत्रैव धारयेदिति पाठः ।

**समाधिसंस्कारवति व्युत्थाने भूयो भूयश्चिदैक्यामर्शान्नित्योदित-समाधिलाभः ॥ १९ ॥**

आसादितसमावेशो योगिवरो व्युत्थाने अपि समाधिरससंस्कारेण क्षीव इव सानन्दं घूर्णमानो, भावराशिं शरदभ्रलवम् इव चिद्गगन एव लीयमानं पश्यन्, भूयो भूयः अन्तर्मुखताम् एव समवलम्बमानो, निमीलनसमाधिक्रमेण चिदैक्यमेव विमृशन्, व्युत्थानाभिमतावसरे अपि समाध्येकरस एव भवति । यथोक्तं क्रमसूत्रेषु

> 'क्रममुद्रया अन्तःस्वरूपया बहिर्मुखः समाविष्टो भवति साधकः । तत्रादौ बाह्यात् अन्तः प्रवेशः, आभ्यन्तरात् बाह्यस्वरूपे प्रवेशः आवेशवशात् जायते;—इति सबाह्याभ्यन्तरोऽयं मुद्राक्रमः'

इति । अत्रायमर्थः सृष्टि-स्थिति-संहृतिसंविच्च-

---

पं० ५ क. पु० समाधिसंस्कारेति, क्षीव इव चात्मानं पूर्यमाणभावेति च पाठः ।

पं० १२ क. पु० बहिर्मुखसमाविष्ट इति समस्तः पाठः ।

पं० १३ ख. पु० तत्र चेत्यस्ति । 'तत्रादौ' इति वाक्यं (ङ० पुस्तकात्) उपन्यस्तम् । क. पु० बाह्यानुप्रवेशोऽभ्यन्तरादिति पाठः ।

क्रात्मकं क्रमं मुद्रयति, स्वाधिष्ठितम् आत्मसात् करोति येयं तुरीया चितिशक्तिः, तया 'क्रममुद्रया'; 'अन्तरिति'—पूर्णाहन्तास्वरूपया; 'बहिर्मुख'—इति, विषयेषु व्यापृतः अपि; 'समाविष्टः'—साक्षात्कृतपरशक्तिस्फारः 'साधकः'—परमयोगी भवति। तत्र च 'बाह्याद्' ग्रस्यमानात् विषयग्रामात् 'अन्तः'—परस्यां चिति भूमौ, ग्रसनक्रमेणैव 'प्रवेशः'—समावेशो भवति। 'आभ्यन्तरात्' चितिशक्तिस्वरूपात् च साक्षात्कृतात् 'आवेशवशात्'—समावेशसामर्थ्यात् एव 'बाह्यस्वरूपे'—इदन्तानिर्भासे विषयग्रामे, वमनयुक्त्या 'प्रवेशः'—चिद्रसाश्यानताप्रथनात्मा समावेशो जायते;—इति 'सबाह्याभ्यन्तरः अयं' नित्योदितसमावेशात्मा, 'मुदो'—हर्षस्य वितरणात् परमानन्दस्वरूपत्वात्, पाशद्रावणात्, विश्वस्य अन्तः

पं० २ ख. पु० यैव इति पाठः।

पं० ३ क. पु० अन्तरितपूर्णाहन्तारूपयेति पाठः।

पं० ८ ग. पु० अभ्यन्तरस्थचितिशक्तिरूपादिति पाठः।

पं० ९ क. पु० साक्षात्कृतावेशसामर्थ्यादेव बाह्येति, ङ. पु० साक्षात्कृतात्समावेशसामर्थ्यादेव बाह्येति पाठः।

पं० ११ ख. ङ. पु० वमनेतिस्थाने ग्रसनयुक्त्या इति पाठः।

तुरीयसत्तायां मुद्रणात् च मुद्रात्मा, क्रमः अपि सृष्ट्यादिक्रमाभासकत्वात् तत्क्रमाभासरूपत्वात् च 'क्रम' इति अभिधीयते इति ॥ १९ ॥

इदानीम् अस्य समाधिलाभस्य फलमाह

**तदा प्रकाशानन्दसारमहामन्त्रवीर्यात्मकपूर्णाहन्तावेशात्सदा सर्वसर्गसंहारकारिनिजसंविद्देवताचक्रेश्वरताप्राप्तिर्भवतीति शिवम् ॥ २० ॥**

नित्योदिते समाधौ लब्धे सति, 'प्रकाशानन्दसारा'—चिदाह्लादैकघना 'महती मन्त्रवीर्यात्मिका'—सर्वमन्त्रजीवितभूता 'पूर्णा' पराभट्टारिकारूपा या इयम् 'अहन्ता'—अकृत्रिमः स्वात्मचमत्कारः, तत्र 'आवेशात्' 'सदा' कालाग्न्यादेः चरमकलापर्यन्तस्य विश्वस्य यौ 'सर्गसंहारौ'—विचित्रौ सृष्टिप्रलयौ 'तत्कारि' यत् 'निजं संवि-

पं० १ क. पु० तुरीयदशायाः सत्तायामिति पाठः।

पं० २ क. पु० सृष्ट्यादिक्रमाभासरूपत्वात् च क्रम इति पाठः।

पं० १४ ख. पु० सदाशिवान्तं कालाग्न्यादेरित्यादि, क. पु० सदा कालाग्न्यादीश्वरसतत्त्वकलान्तस्येति पाठः।

द्देवताचक्रं' 'तदैश्वर्यस्य' 'प्राप्तिः'–आसादनं 'भवति,' प्राकरणिकस्य परमयोगिन इत्यर्थः; 'इति' एतत् सर्वं शिवस्वरूपमेव इति उपसंहारः–इति संगतिः। तत्र यावत् इदं किंचित् संवेद्यते, तस्य संवेदनमेव स्वरूपं; तस्यापि अन्तर्मुखविमर्शमयाः प्रमातारः तत्त्वम्; तेषामपि विगलितदेहाद्युपाधिसंकोचाभिमाना अशेषशरीरा सदाशिवेश्वरतैव सारम्; अस्या अपि प्रकाशैकसद्भावापादिताशेषविश्वचमत्कारमयः श्रीमान् महेश्वर एव परमार्थः;–नहि पारमार्थिकप्रकाशावेशं विना कस्यापि प्रकाशमानता घटते–स च परमेश्वरः स्वातन्त्र्यसारत्वात् आदि-क्षान्तामायीयशब्दराशिपरामर्शमयत्वेनैव एतत्स्वीकृतसमस्तवाच्य-वाचकमयाशेषजगदानन्दस-

---

पं० २ क. पु० प्राकरणिकयोगिन इति पाठः।
पं० ४ क. ग. पु० यदिदम् इति पाठः ।
पं० ५ ख. पु० अन्तर्मुखमया इति पाठः ।
पं० ६ ख. ङ. पु० देहादिसंकोचेति 'उपाधि' पदहीनः पाठः ।
पं० ७ क. पु० सदाशिवेश्वरता तत्रैवेति पाठः ।
पं० ९ क. पु० श्रीमहेशः परमार्थ इति पाठः ।
पं० १२ ख. पु० आदिक्षान्तमायीयेति पाठः ।
पं० १३ ङ. पु० तत्स्वीकृतेति पाठः ।
पं० १४ क. पु० आनन्दमयसंभवापादादिति पाठः ।

द्भावापादनात् परं परिपूर्णत्वात् सर्वाकाङ्क्षाशून्यतया आनन्दप्रसरनिर्भरः; अत एव अनुत्तराकुलस्वरूपात् अकारात् आरभ्य शक्तिस्फाररूपहकला[२०]पर्यन्तं यत् विश्वं प्रसृतं, क्षकारस्य प्रसरशमनरूपत्वात्; तत् अकार-हकाराभ्यामेव संपुटीकारयुक्त्या प्रत्याहारन्यायेन अन्तः स्वीकृतं सत् अविभागवेदनात्मकबिन्दुरूपतया स्फुरितम् अनुत्तर एव विश्राम्यति;—इति शब्दराशिस्वरूप एव अयम् अकृतको विमर्शः । यथोक्तं

> 'प्रकाशस्यात्मविश्रान्तिरहं-भावो हि कीर्तितः ।
> उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ॥
> स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च ।'

इति। एषैव च अहन्ता सर्वमन्त्राणाम् उदयवि-

---

२० हकारो व्योमशक्तिरूपः हकला व्योमकला, ततः परं किमपि नास्ति, तत्सर्वत्रास्ति तत्र न किंचिदस्तीति भावः ।

---

पं० १ ङ. पु० परिपूर्णत्वेनेति पाठः ।

पं० २ क. पु० अनुत्तराकुलसंभवापादनस्वरूपादिति पाठः ।

पं० ४ ख. ङ. पु० हकारपर्यन्तम् इति ग. पु० क्षकारस्याप्यप्रसररूपत्वात् अकारेति, क. पु० क्षकारस्यापिप्रसरणत्वात्तदिति च पाठः ।

श्रान्तिस्थानत्वात् एतद्बलेनैव च तत्तदर्थक्रियाकारित्वात् महती वीर्यभूमिः । तदुक्तम्

'तदाक्रम्य बलं मन्त्रा······················।'

इत्यादि

·················त एते शिवधर्मिणः ॥'

इत्यन्तम् श्रीस्पन्दे । शिवसूत्रेषु अपि

'महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः[21], (१उ०२२सू०)

इति। तदत्र महामन्त्रवीर्यात्मिकायां पूर्णाहन्तायाम् 'आवेशो'—देहप्राणादिनिमज्जनात् तत्पदावाप्त्यवष्टम्भेन देहादीनां नीलादीनामपि तद्रसाप्लावनेन तन्मयीकरणम्। तथा हि—देहसुखनीलादि यत् किंचित् प्रथते, अध्यवसीयते, स्मर्यते संकल्प्यते वा, तत्र सर्वत्रैव भगवती चितिशक्तिमयी प्रथा भित्तिभूतैव स्फुरति;—तदस्फुरणे कस्यापि अस्फुरणात् इति उक्तत्वात्। केवलं तथा स्फुरन्त्यपि सा, तन्मायाशक्त्या

२१ शब्दराशिस्फारात्मकपराहन्ताविमर्शो यस्य, तस्य मन्त्रवीर्यस्यानुभवः, स्वात्मतया स्फुरणं भवतीत्यर्थः।

पं० २ क. पु० महती वीर्यभूमिः इति वाक्यं नास्ति।
पं० १० क. पु० देहादीनामपि वा तद्रसेत्यादि पाठः।
पं० १२ ख. पु० व्यवसीयते इति पाठः।

अवभासितदेहनीलाद्युपरागदत्ताभिमानवशात् भिन्नाभिन्नस्वभावा इव भान्ती ज्ञानसंकल्पाध्यवसायादिरूपतया मायाप्रमातृभिः अभिमन्यते; वस्तुतस्तु एकैव असौ चितिशक्तिः। यथोक्तम्

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥'

इति। तथा

'मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।
कथिता ज्ञानसंकल्पाध्यवसायादिनामभिः ॥'

इति। एवम् एषा सर्वदशासु एकैव चितिशक्तिः विजृम्भमाणा यदि तदनुप्रवेश-तदवष्टम्भयुक्त्या समासाद्यते, तत् तदावेशात् पूर्वोक्तयुक्त्या करणोन्मीलननिमीलनक्रमेण सर्वस्य सर्वमयत्वात् तत्तत्संहारादौ अपि 'सदा सर्वसर्गसंहारकारि' यत् 'सहजसंवित्तिदेवताचक्रम्'—अमायीयान्तर्वहिष्करणमरीचिपुञ्जः, तत्र 'ईश्वरता'—

पं० १ क. ग. पु० उपरागेदन्ताभिमानेति पाठः।
पं० ३ क. ग. पु० रूपताप्रमातृभिरिति पाठः।
पं० ७ क. पु० प्रमाता परमेश्वर इति पाठः।
पं० १५ ग. पु० तत्समाधाविति पाठः।
पं० १६ ख. ङ. पु० यन्निजं संविद्देवेति पाठः।
पं० १७ क. पु० ईश्वरत्वसाम्राज्यपरभैरवात्मा इति पाठः।

साम्राज्यं परभैरवात्मता, तत्प्राप्तिः भवति परमयोगिनः । यथोक्तम्

'यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन्भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ॥'

इति । अत्र एकत्र इति

'एकत्रारोपयेत्सर्वम्............................।'

इति । चित्सामान्यस्पन्दभूः उन्मेषात्मा व्याख्यातव्या । तस्य इति अनेन

'पुर्यष्टकेन संरुद्ध..............................।'

इति । उपक्रान्तं पुर्यष्टकम् एव परामृष्टव्यम्; न तु यथा विवरणकृतः 'एकत्र सूक्ष्मे स्थूले शरीरे वा' इति व्याकृतवन्तः । स्तुतं च मया

'स्वतन्त्रश्चितिचक्राणां चक्रवर्ती महेश्वरः ।
संवित्तिदेवताचक्रजुष्टः कोऽपि जयत्यसौ ॥'

इति । इतिशब्द उपसंहारे, यत् एतावत् उक्तप्रकरणशरीरं तत् सर्वं 'शिवम्'—शिवप्राप्तिहेतु-

---

पं० ४ ख. पु० तदा चक्रेश्वर इति पाठः ।

पं० ७ ङ. पु० इतिवत्सामान्येति, क. पु० सामान्यभूरुन्मेषेति पाठः ।

पं० ८ ख. पु० व्याख्याता इति पाठः ।

त्वात्, शिवात् प्रसृतत्वात् शिवस्वरूपाभिन्न-त्वात् च, शिवमयमेव इति शिवम् ॥

देहप्राणसुखादिभिः प्रतिकलं संरुध्यमानो जनः
पूर्णानन्दघनामिमां न चिनुते माहेश्वरीं स्वां चितिम् ।
मध्येबोधसुधाब्धि विश्वमभितस्तत्फेनपिण्डोपमं
यः पश्येदुपदेशतस्तु कथितः साक्षात्स एकः शिवः ॥

येषां वृत्तः शांकरः शक्तिपातो
येऽनभ्यासात्तीक्ष्णयुक्तिष्वयोग्याः ।
शक्ता ज्ञातुं नेश्वरप्रत्यभिज्ञा-
मुक्तस्तेषामेष तत्त्वोपदेशः ॥

---

## समाप्तमिदं प्रत्यभिज्ञाहृदयम् ॥

कृतिस्तत्रभवन्महामाहेश्वराचार्यवर्यश्रीमदभि-नवगुप्तपादपद्मोपजीविनः श्रीमतो राजानक-क्षेमराजाचार्यस्य ॥

शुभमस्तु ॥

---

पं० १ ग. पु० शिवात्मसतत्त्वात् इति पाठः ।
पं० ५ ङ. पु० विश्वमखिलमिति पाठः ।
पं० ६ ङ. पु० यः पश्यस्युपदेशत इति पाठः ।
पं० ८ क. ग. पु० युक्तिष्वतीक्ष्णा इति पाठः ।

अथ

# प्रत्यभिज्ञाहृदये परिशिष्टभागः ।

## तत्र प्रथमपरिशिष्टम् ।

## अकारादिक्रमेण सूत्राणामनुक्रमणिका ।

इति प्रत्यभिज्ञाहृदयस्थसूत्राणामकारादिक्रमसूची समाप्ता ॥

अथ

# द्वितीयपरिशिष्टम् ।

## प्रत्यभिज्ञाहृदये संवादितप्रमाणवाक्यानामकाराद्यनुक्रमणिका ।

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| अख्यातिर्यदि न ख्याति | १० | (क्षेमराजः) (?) |
| अज्ञानाच्छङ्कते लोकः | २७ | सर्ववीरभट्टारकः |
| अत एव तु ये केचित् | १३ | तत्त्वगर्भस्तोत्रं |
| अनच्ककक्कृतायति | ४४ | ज्ञानगर्भस्तोत्रं |
| अन्तर्लक्ष्यो बहिर्दृष्टिः | ४२ | (?) |
| इति वा यस्य संवित्तिः (२नि०५का०) | ३७ | स्पन्दः |
| उन्मेषः स तु विज्ञेयः(३नि०९का०उत्तरार्ध) | ४५ | स्पन्दः |
| एकत्रारोपयेत्सर्वं | ५३ | (?) |
| क्रममुद्रयाऽन्तःस्वरूपया | ४६ | क्रमसूत्रं |
| ग्राह्यग्राहकसंवित्तिः (१०६ श्लो०) | ५ | विज्ञानभैरवः |
| चित्तमात्मा ( ३ उ० १ सू० ) | १४ | शिवसूत्रं |
| चैतन्यमात्मा (१उ०१सू०) | १४ | शिवसूत्रं |
| चैतन्यविशिष्टं शरीरमात्मा | १६ | चार्वाकमतं (?) |
| जग्धिपानकृतोल्लास (७२ श्लो०) | ४५ | विज्ञानभैरवः |
| ते आत्मोपासकाः शैवं (८अधि३०श्लो०पूर्वार्ध) | | मृत्युजित् |
| (तथा४पट०३८७उत्त०) | १९ | स्वच्छन्दः |
| तदपोद्धृते नित्योदितस्थितिः | ४२ | (?) |
| तदाक्रम्य बलं मन्त्राः (२नि०१का०) | ३५,५१ | स्पन्दः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| तदेवं व्यवहारेऽपि (१अ०६आ०७का०) | २३ | प्रत्यभिज्ञा |
| 'तावदर्थावलेहेन | २० | प्रत्यभिज्ञाटीका |
| 'न चैवं वक्तव्यम् | ३६ | प्रत्यभिज्ञाटीका |
| पराञ्चि खानि व्यतृणत्स्वयंभूः (२अध्या० ४वल्ली १ म०) | ४१ | कठोपनिषत् |
| पुर्यष्टकेन संरुद्धः (३ नि०१७का०उत्त०) | ५३ | स्पन्दः |
| पूर्णावच्छिन्नमात्रन्तर् | ३० | भट्टदामोदरः(?) |
| प्रकाशस्यात्मविश्रान्तिः (२२ उत्त २३) | ५० | अजडप्रमातृसिद्धिः |
| प्राक्संवित्प्राणे परिणता | ३८ | तत्त्वार्थचिन्तामणिः |
| वुद्धितत्त्वे स्थिता बौद्धाः | १८ | आगमः(?) |
| भ्रमयत्येव तान्माया (८ आह्नि०) | १९ | तन्त्रालोकः |
| मनुष्यदेहमास्थाय | ३२ | आगमः |
| मन्त्रा वर्णात्मकाः सर्वे | २७ | सर्ववीरभट्टारकः |
| महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः(१—२२) | ५१ | शिवसूत्रं |
| मायाशक्त्या विभोः सैव (१अधि०५आह्नि० १८ का) | ५२ | प्रत्यभिज्ञा |
| यथा तथा यत्र तत्र (५१ श्लो०) | ४४ | विज्ञानभैरवः |
| यथा वह्निरुद्बोधितो | ३५ | क्रमसूत्रं |
| यदा क्षोभः प्रलीयेत(१नि०९का०उत्त०) | ४० | स्पन्दः |
| यदा त्वेकत्र संरूढः ( ३ नि०१९का ) | ५३ | स्पन्दः |
| यस्मात्सर्वमयो जीवः ( ३ नि० ३ का ) | ११ | स्पन्दः |
| या चैषा प्रतिभा तत्तत्(१अधि०७आह्नि०१का०) | ५२ | प्रत्यभिज्ञा |
| रूपादिषु परिणामात्तत्सिद्धिः | ४३ | भट्टकल्लटः (?) |
| वर्तन्ते जन्तवोऽशेषा(२० स्तो० २७ श्लो०) | ३५ | शिवस्तोत्रावलिः |

इति प्रत्यभिज्ञाहृदये प्रमाणवाक्यानुक्रमणिका समाप्ता ॥

अथ

# तृतीयपरिशिष्टम् ।

## प्रत्यभिज्ञाहृदये प्रामाणिकग्रन्थ-तत्प्रमाणानां यथायथं समुच्चयनम् ।

इति प्रत्यभिज्ञाहृदये प्रामाणिकग्रन्थ-तत्प्रमाणानां यथायथं समुच्चयनम् ॥

---

अथ

# प्रत्यभिज्ञाहृदये चतुर्थपरिशिष्टम् ।

## अकारादिक्रमेण पारिभाषिकपदसंग्रहतदर्थविवरणात्मकम् ।

| पदानि | अर्थविवरणम् | पृ० सं० |
| --- | --- | --- |
| अख्यातिः | संकोचः । | १० |
| अणुः | सकलप्रमाता ( अर्थान्तरं शिवसू० वि० पु० ११ शे पृष्ठे ५२ तमटिप्पन्यां द्रष्टव्यम् ) । | २० |
| अनन्तभट्टारकः | विद्यातत्त्वावस्थितानां मन्त्रप्रमातॄणामधिष्ठाता । | ७ |
| अनाश्रितशिवः | शून्यातिशून्यात्मा, शिवतत्त्वावस्थितकारणपञ्चके प्रथमं कारणं वा । | ९ |
| अन्तःकोटिः | द्वादशान्तः । | ४४ |
| अलंग्रासयुक्तिः | प्रशमविशेषः ( यत्र अत्यर्थं सृष्ट्याद्युपाधीनां स्वात्मसात्कारः ) । | २५ |
| अवरोहपदम् | मायाप्रमातृभावः । | ३४ |
| आणवमलम् | अपूर्णमन्यता । | १५ |
| आदिकोटिः | हृदयम् । | ४४ |
| ईश्वरतत्त्वम् | स्फुटेदन्ताहन्तासामानाधिकरण्येन तथाविधविश्वावभासनमयी व्यवस्था । | ७ |
| ईश्वरभट्टारकः | ईश्वरतत्त्वावस्थितानां मन्त्रेश्वराणामधिष्ठाता । | ७ |

| पदानि | अर्थविवरणम् | पृ० सं० |
| --- | --- | --- |
| उन्मीलनम् | अवस्थितस्यैव प्रकटीकरणम् । | ६ |
| उन्मेषः | स्पन्दभूमिः । | ४५ |
| ऊर्ध्वकुण्डलिनी | औन्मनसं पदम् । | ४३ |
| करणेश्वर्यः | खेचरी-गोचरी-दिक्करी-भूचरीचक्रम् । | ३५ |
| कला | संकुचिता कर्तृत्वशक्तिः । | १६ |
| कार्ममलं | शुभाशुभानुष्ठानम् । (अर्थान्तरं शि० सू० वि० १५ पृ० ७०टिप्पन्यां च द्रष्टव्यम्) । | १५ |
| कालः | संकुचितनित्यताशक्तिः । | १६ |
| कालाग्निः | निवृत्तिकलायां कालाग्निभुवनेशो नाम रुद्रविशेषः, (यत्प्रकोपोपक्रमे विश्वं समुपरम्यते संहारारम्भे) । | ४८ |
| क्रममुद्रा | तुरीया चितिशक्तिः, (सृष्टि-स्थिति-संहृतिसंविच्चक्रात्मकं क्रमं मुद्रयति स्वाधिष्ठितमात्मसात्करोति इति ) । | ४६ |
| खेचरीचक्रम् | कलादिशक्तिचक्रम् । प्रमातृभूमिकाश्रितो योगिनीगणो वा | २९ |
| गोचरीचक्रम् | भेदनिश्चयाभिमानविकल्पनप्रधानान्तःकरणदेवीसमूहः । | २९ |
| ग्राहकः | विकल्पमयो जीवः । | ११ |
| चरमकला | शान्त्यतीताख्या कला । | ४८ |
| चित्तम् | संकोचप्रकर्षात् चितिशक्तेः सत्त्वादिस्वभावतया स्फुरणस्वरूपम् । मायीयप्रमातुः स्वरूपं वा । | १३ |
| दिक्करीचक्रम् | भेदालोचनादिप्रधानबहिष्करणदेवताचक्रम् । | २९ |

| पदानि | अर्थविवरणम् | पृ० सं० |
|---|---|---|
| नियतिः | संकुचितव्यापकत्वशक्तिः । ममेदं कर्तव्यमिति नियमहेतुः तत्त्वविशेषो वा । | १६ |
| पञ्चकृत्यानि | सृष्टिः स्थितिः संहारो विलयोऽनुग्रहः इत्येवमभिधानानि । अथवा आभासन-रक्ति-विमर्शन-बीजावस्थापन-विलापनाख्यानि । तत्र देहप्राणादिपदमाविशन् चिद्रूपो महेश्वरो बहिर्मुखीभावावसरे नीलादिकमर्थं नियतदेशकालादितया यदा भासयति तदा नियतदेशकालाद्याभासांशे अस्य स्रष्टृता, अन्यदेशकालाद्याभासांशे संहर्तृता, नीलाद्याभासांशे स्थापकता, भेदेन आभासांशे विलयकारिता, प्रकाशैक्येन प्रकाशने अनुग्रहीतृता, इति । | २२–२४ |
| पतिदशा | परप्रमातृदशा, शुद्धाध्वप्रमातृता, मुक्तिर्वा । | ३१ |
| परमशिवः | विश्वोत्तीर्णविश्वात्मकपरमानन्दमयप्रकाशैकघनः स्वभावः । | ८ |
| परावाक् | अनन्यापेक्षाहंपरामर्शमयी पराशक्तिः, परमानन्दात्मकस्वातन्त्र्यशक्तिर्वा । | २७ |
| पराशक्तिः | पारमेश्वरी स्वातन्त्र्यशक्तिः, (यया इदं शिवादिधरण्यन्तमविकल्पकसंविन्मात्ररूपतया बिभर्ति च पश्यति च भासयति च परमेश्वरः) । | २ |
| पशुः | अज्ञानी, अविद्यासितादिभिः पाशितो जीवः । | ३८ |

| पदानि | अर्थविवरणम् | पृ० सं० |
|---|---|---|
| पश्यन्ती | वाग्विशेषः ( यत्र वाच्यवाचकयोः क्रमानुल्लासेन अस्फुटविभागः, चित्प्राधान्यात् पराशक्तेः द्रष्टृरूपताप्राप्तिश्च ) । | २७ |
| पुर्यष्टकम् | तन्मात्र-मनोऽहंकृद्बुद्धीनां संघातात्मकमष्टकं सूक्ष्मशरीरम् । | ३१ |
| प्रलयकेवलिनः | मायातत्त्वावस्थिताः शून्यप्रमातारः, प्रलयाकला इत्यभिधान्तराः । | ७ |
| बन्धः | शिवतत्त्वापरिज्ञानम्, (अर्थान्तरं शि०सू० वि० १२–१३ पृ० ७४ टिप्पन्यां च द्रष्टव्यम् ) । | ११ |
| बैन्दवी कला | स्वातन्त्र्यशक्तिः। | ४ |
| ब्रह्मनाडी | सुषुम्नाख्या मध्यनाडी । | ३९ |
| भूचरीचक्रम् | सर्वतो व्यवच्छिन्नाभासस्वभावप्रमेयचक्रम् । | २९ |
| भूमिका | चिदानन्दघनस्वात्मस्वरूपाभिव्यक्त्युपायः । | १९ |
| मध्यम् | संवित् । | ३७ |
| मध्यधाम | ब्रह्मनाडी । | ३१ |
| मध्यमा | वाग्विशेषः ( यत्र वाच्यवाचकक्रमस्य आसूत्रितविभागत्वेऽपि स्फुटास्फुटरूपतया बुद्धिमात्रपरिनिष्ठा, पराशक्तेः दर्शनप्रधानतया द्रष्टृदृश्यान्तरालवर्तित्वम् च ।) | २७ |
| मध्यशक्तिः | संविच्छक्तिः । | ३९ |
| मन्त्रमहेश्वराः | प्रमातृवर्गः (यः परमेश्वरेच्छया सदाशिवतत्त्वे अवकल्पितपरापरात्मविश्वग्रहीतृभावावस्थानः) । | ७ |
| मन्त्राः | विद्यातत्त्वमध्यासिताः प्रमातारः । | ७ |

| पदानि | अर्थविवरणम् | पृ० सं० |
|---|---|---|
| मन्त्रेश्वराः | प्रमातृवर्गविशेषः (ईश्वरतत्त्वे स्फुटेदन्ताहन्तासामानाधिकरण्यात्मनि ग्राह्ये विश्वस्मिन् परिकल्पित-तथाविधतद्ग्रहीतृभावावस्थितिः । | ७ |
| माया | दुर्घटसंपादनसमर्थः शक्तिविशेषः । | ७ |
| मायाप्रमाता | जीवः, सकलाख्यः प्रमाता वा । | १४ |
| मायीयमलम् | भिन्नवेद्यप्रथा, मायादिविद्यातत्त्वान्तकञ्चुको वा । | १५ |
| मुक्तिः | शिवभट्टारकात्मतत्त्वपरिज्ञानम्, अज्ञानग्रन्थिभेदात्स्वशक्त्यभिव्यक्तिः, विश्वोत्तीर्णपरमशिवीभावो वा । | ११ |
| रागः | षट्त्रिंशत्तत्त्वान्तर्वर्तितत्त्वविशेषः,संकुचितपूर्णत्वशक्तिर्वा । | १६ |
| वह्निः | षष्ठवक्त्रात्मशक्तेर्मूलभूमिः संकोचहेतुः । | ४३ |
| वामेश्वरी | विश्ववमनशीला, संसारवामाचारशालिनी च शक्तिः । | २९ |
| वाहच्छेदः | वामदक्षिणगतयोः प्राणापानयोः हृदयविश्रान्तिपुरःसरमन्तः ककार-हकारादिप्रायानच्कवर्णोच्चारेण विच्छेदनम् । | ४३ |
| विज्ञानाकलाः | मायतत्त्वस्य उपरि शुद्धविद्यातत्त्वात् अधः कल्पितावस्थानः कर्तृताशून्यशुद्धबोधात्मा प्रमातृवर्गः । | ७ |
| विद्या | उन्मनाशक्तिः । किंचिज्ज्ञत्वकारणं तत्त्वम् । संकुचिता सर्वज्ञत्वशक्तिर्वा, (अर्थान्तरं शि० सू० वि० ५० पृष्ठे द्रष्टव्यम्) । | १६ |

| पदानि | अर्थविवरणम् | पृ० सं० |
|---|---|---|
| विद्यापदम् | विद्यातत्त्वम्, मायाप्रमातरि शून्यादिरूपेऽपि अनुल्लसिते चिन्मात्र एव प्रमातरि कर्तरि च सति चिदेकरूपेष्वपि भावेषु यदचिद्रूपतया भेदप्रकाशलक्षणं स्वातन्त्र्यम्। | १७ |
| विश्वम् | सदाशिवादिर्भूम्यन्तः तत्त्वनिचयः । यद्वा प्रमातृप्रमाणप्रमेयरूपम् । अथवा नीलसुखदेहप्राणादि । | २–३--४ |
| विश्वसिद्धयः | भोगमोक्षस्वरूपाः । | ४ |
| विषस्थानम् | प्रसरयुक्त्या विकासपदम् । | ४३ |
| शक्तिपातः | अनुग्राहिकाख्यायाः शक्तेः स्वमरीचिचयस्फारः । | १ |
| शक्तिविकासः | अन्तर्निगूढायाः शक्तेः अक्रममेव सकलकरणचक्रविस्फारणेन भैरवीयमुद्रानुप्रवेशयुक्त्या बहिःप्रसरणम् । | ४२ |
| शक्तिसंकोचः | इन्द्रियद्वारेण प्रसरन्त्या एव शक्तेः आकुञ्चनक्रमेण उन्मुखीकरणम् । प्रसृताया अपि वा कूर्माङ्गसंकोचवत् त्राससमये हृत्प्रवेशवच्च सर्वतो निवर्तनम् । | ४१ |
| शिवभट्टारकः | मन्त्रमहेश्वराद्युत्तीर्णः प्रकाशैकवपुः स्वस्वभावः। | ८ |
| शुद्धाध्वा | शिवादिविद्यातत्त्वान्तं तत्त्वपञ्चकम् । | १२ |
| शुद्धेतराध्वा | अशुद्धाध्वा ( क्षित्यादिमायान्तः तत्त्वसमूहः ) । | २३ |
| शून्यप्रमातारः | शून्ये जडत्वादबोधरूपे, प्राणे बुद्धौ वा येषामहमिति चमत्कारयोगात् कर्तृत्वम्, | |

| पदानि | अर्थविवरणम् | पृ० सं० |
|---|---|---|
| | कलातत्त्वोपलक्षितकरणकार्यरहिता अबोधरूपाः कर्तारश्च प्रलयाकलाः । | ७ |
| शून्यभूमिः | प्रलयाकलावस्था । | १३ |
| षट्त्रिंशत्तत्त्वानि | १ शिव २ शक्ति ३ सदाशिव ४ ईश्वर ५ शुद्धविद्या ६ माया ७ कला ८ विद्या ९ राग १० काल ११ नियति १२ पुरुष १३ प्रकृति १४ बुद्धि १५ अहंकार १६ मनः १७ श्रोत्र १८ त्वक् १९ चक्षुः २० जिह्वा २१ घ्राण २२ वाक् २३ पाणि २४ पाद २५ पायु २६ उपस्थ २७ शब्द २८ स्पर्श २९ रूप ३० रस ३१ गन्ध ३२ आकाश ३३ वायु ३४ वह्नि ३५ सलिल ३६ भूमयः । | ३२ |
| संवित्तिदेवताचक्रम् | खेचर्यादिदेवीचक्रम्, अन्तर्बहिष्करणमरीचिपुञ्जो वा । | ५२ |
| सकलाः | मायातत्त्वान्तरालवर्तिनो देवादिस्थावरान्ता मलत्रयभाजः कार्ममलप्राधान्यात्संसारिणः कार्यकारणसंबद्धा जीवाः । | ८ |
| सदाशिवतत्त्वम् | तृतीयं तत्त्वम् । अहन्ताच्छादितास्फुटेदन्तावभासनमयोऽवस्थाविशेषः, ( महाशून्यातिशून्याख्यायां शक्तौ महेशस्य अहमिदमित्यभेदेन पूर्णाहन्ताचमत्कारमयावस्थाविशेषो वा ) । | ७ |
| सदाशिवभट्टारकः | सदाशिवतत्त्वावस्थितानामधिष्ठातृविशेषः । | ७ |

| पदानि | अर्थविवरणम् | पृ०सं० |
|---|---|---|
| समावेशः | मितप्रमातृभावगुणीकारात् स्वतन्त्रबोधतादात्म्यम् । | १ |
| सिद्धिः | निष्पत्तिः सृष्ट्यात्मा, प्रकाशात्मा स्थितिः, परप्रमातृविश्रान्त्यात्मा संहारः । यद्वा पराद्वयसामरस्यापादनात्मा संहारः । अथवा प्रमाणोपारोहक्रमेण विमर्शमयप्रमात्रावेशः । | २–४ । |
| स्थितिः | भावाभिष्वङ्गः । सिद्धान्तः । अन्तर्मुखरूपा विश्रान्तिर्वा । | १६–१९ |
| हठपाकक्रमः | हठः क्रमातिक्रमरूपसकृदुपदेशात्मबलात्कारः तेन पाकः चिदग्निसात्कारः, तस्य क्रमेण सृष्ट्याद्युपाधीनां विगलनम्, इति हठपाकक्रमाख्यः प्रशमविशेषः । | २५ |

इति प्रत्यभिज्ञाहृदये सविवरणः पारिभाषिकपदसंग्रहः समाप्तः ॥

---

THE

# KASHMIR SERIES

OF

# TEXTS AND STUDIES.

BEING A PROSPECTUS OF THE PUBLICATIONS

OF THE

Archæological and Research Department

OF THE

JAMMU AND KASHMIR STATE.

EDITED BY

JAGADĪSHA CHANDRA CHATTERJI,

B. A. (CANTAB.), VIDYĀVĀRIDHI.

DIRECTOR

OF THE DEPARTMENT.

SRINAGAR,

KASHMIR.

*February, 1912.*

*N. B.*—The Publications to be had of the principal Oriental Booksellers throughout the world.

# THE
# ARCHÆOLOGICAL AND RESEARCH DEPARTMENT,
## JAMMU AND KASHMIR STATE.

### THE
### *KASHMIR SERIES OF TEXTS AND STUDIES.*

## A FULL LIST
### OF
## *Works in the Press and in Preparation.*

The Archæological and Research Department of the Jammu and Kashmir State has been preparing for publication a number of Sanskrit and Kashmiri Works which have remained unpublished till this day. These works when published will form a Series, to be called the "Kashmir Series of Texts and Sudies." The first of the Series was to be:—

1. *The Raṇavīra Prāyashchitta-Nibandha.*—Which His Highness the Mahārājā Sahib Bahadur wanted the Department to take in hand first. But although quite ready for the press, it cannot be published yet owing to certain difficulties in regard to its printing. It is a work which in MS. covers over 1,000 pages ( foolscap size ). It forms part of a great work entitled Dharma Shāstra Prapañcha, compiled by order of His late Highness Mahārāja Raṇavīra Siṁha, and consists largely of quotations from nearly all branches of Hindu Scriptures. All of those quotations were given in the original compilation without any exact reference. In many cases the vague references given

were erroneous and misleading. All these have been carefully corrected and most of the quotations have been traced back to their original sources and exact references given. Thus the work has cost the Department an immense amount of labour, and it is hoped that it will be possible to place the work in the hands of the public without further delay. As owing to reasons hinted at above, the first fruits of the activities of the Department cannot see the light yet and, therefore, could not form the first publication of the Series, its place has been taken by the

2. i. Shiva-Sūtra-Vimarshinī, (being the Shiva Sūtras said to have been received inspirationally or in a dream by the Vasu Gupta together with its Commentary, the Vimarshinī, by Kshemarāja ) Published in original Sanskrit; price Rs. 2/8. ( Rs. 3 in cloth; foreign, 3/6 and 4 shilling ).

3. ii. The Kashmir Shaivaism, being a brief Introduction to the history, literature and doctrines of the Advaita Shaiva Philosophy of Kashmir, Specifically called the Trika System. Published in English; price Rs. 1/12. Superior paper, Rs. 2/8.

4 iii. The Pratyabhijñā-Hṛidaya, by Kshemarāja. An excellent compendium of 20 Sūtras together with the author's own Commentary, giving a summary of the doctrine of the Trika *i. e.* the Advaita Shaivaism of Kashmir. It may be said to bear the same relation to the Trika system as the well-known Vedānta Sāra of Sadānanda does to the Vedānta system. Published in original Sanskrit, price Re. 1. In cloth Re. 1/6.

## WORKS IN THE PRESS.

5. i. *Shiva-Sūtra-Vārttika*—by Bhāskara.

6. ii. *Shiva-Sūtra-Vṛitti*—This also is, as the name implies, a commentary on the Shiva Sūtras by an unknown author; or it may be merely an abstract from the Shiva Sūtra Vimarshinī of Kṣhemrāja, almost every word of it being found interspersed in the latter work.

7. iii. *Spanda-Vṛitti.*—By Kallaṭa. It is a short commentary on the Spanda Kārikās.

8. iv. *Spanda-Vivṛiti.*—by Rāma or Rāmakaṇṭha. A second commentary on the Spanda-Kārikās.

9. v. *Spanda-Pradīpikā.*—By Utpala Vaiṣhṇava (this Utpala is not the same as the author of the Īshvara-Pratyabhijñā-Kārikās ). It is also called the Utpala-Vaiṣhṇavī and is a third commentary on the Spanda-Kārikās. Although it has been printed before in Benares, the present edition is being brought out after carefully collating a number of MSS.

The above three works, being commentaries on the Spanda-Kārikās, naturally deal with the same subject and explain, in more or less detail, what are technically called ( *a* ) *Svarūpa Spanda* ( *b* ) *Sahaja-vidyodaya* and ( *c* ) *Vibhuti-yoga*;

10. vi. *Spanda-Sandoha.*—It is a sort of commentary on the first of the Spanda Kārikās wherein is given the purport of the whole of the latter work. It is also by Kṣhemarāja.

11. vii. The *Īshvara-Pratyabhijñā Sūtras* or *Karikās* of Utpalāchārya together with the *Vimarshinī* of Abhinava Gupta ( and the incomplete Vritti by Utpalāchārya himself ).

12. viii. *Parāprāveshikā.*—By Kṣhemarāja, a very

short work on the Shaiva Philosophy, dealing with the 36 principles (Tattvas) recognised by the system.

13. ix. *Tattva-Sandoha.*—Another small work by the same author in Āryā Verses and dealing with the same subject.

14. x. *Paramārtha-Sāra.*—By Abhinava Gupta with a commentary by Yogarāja. For an account of this work, see "*The Kashmir Shaisvaism*" *i. e.* the second of the published volumes of this series.

15. xi. *Stava-Chintāmaṇi.*—By Bhaṭṭa Nārāyaṇa. As the name implies it consists of Stotras and is a devotional work from the standpoint of the Shaiva Philosophy.

## IN PREPARATION.

16. i. Tantrāloka—the great work of Abhinava Gupta on the Shaivaism of Kashmir together with its Commentary called Viveka by Jayaratha (as far as the latter is available).

17. ii. Tantrasāra—being an abridgement in prose of the above work by the same author

18. iii. Mālinī-Vijaya (Tantra)

19. iv. Svachchhanda (Tantra), together with a Kṣhemaraja's commentary on it called Udyota.

20. v. Vijñāna-Bhairava (Tantra), together with its commentary partly by Kṣhemarāja and partly by Shivopādhyāya.

21. vi. Matan̄ga Tantra, with its commentary called the Vṛitti by Rāmakaṇṭha.

22. vii. Parā-Triṁshikā, being an extract said to be taken from the Rudra-Yāmala, together with its commentary called the Vivaraṇa by Abhinava Gupta.

23. viii. Mahārtha-Mañjarī.
24. ix. Nareshvara-Parīkṣhā.
25. x. Netra Tantra
26. xi. Mahānaya-Prakāsha
27. xii. Saṁvit-Sphāra.

All the above are works on the Kashmir Shaivaism. An account of most of them is to be found in '*The Kashmir Shaivaism*' *i. e.* Vol. II. of the series.

Besides the above the following other works are also included in the series ( some of them quite ready for the press and others are still in preparation. )

28. i. Commentary on the *Bhagavad Gītā.* by Abhinava Gupta.
29. ii. Another commentary on the same by Rāma-Kaṇṭha; it is called *Sarvatobhadra.*
30. iii. Another commentary on the same called *Tattva-Prakāshikā* by Lakṣhmīrāma or Lakṣhmīdhara.
31. iv. *Shārīraka Sāra,* by Lakṣhmīdhara.
32. v. *Pañchīkaraṇavārttika.*
33. vi. *Tripuropaniṣhat.*
34. vii. *Vedānta-Sāra.* (Not the well known Vedānta-Sāra by Sadānanda. )
35. viii *Ānanda Laharī.*—A work on Yoga.
36. ix. *Viṣhṇu Dharmottara.*—A work of the Purāṇa style, being a short Encyclopædia of the Hindu religion and learning.
37 x. *Loka-Prakāsha.*

The later *Rāja-Taraṅgiṇīs.* ( These will most likely not now be published by this Department).

Further, there are included in the series the following works in Kashmiri, some of which are ready for the press and others are in preparation.

38. i. *Shiva-Lagan* ( *Shiva's Marriage* ).—A poem covering some 400 leaves in Ms.

39. ii. *Rāma-Avatāra* ( *Story of Rāma* ).—A poem 200 leaves in Ms.

40. iii. *Krishna-avatāra*—By Prakāshānanda.

41. iv. *Krishna-avatāra*.—Another work on the same subject by Paramānanda, covering 345 leaves in Ms.

42. v. *Yonuka Wanvun*,—Songs sung by Hindu women on the occasion of the Sacred Thread ceremony.

43. vi. *Natruk Wanvun*..—Marriage songs sung by Hindu women.

44. vii. *Mar Wanvun*.—Death lamentations.

45. vii. The Philosophical sayings of Lalleshvarī.

46. viii. The Philosophical sayings of Rūpa Bhavānī.

47. ix. A poem on the life of Sudāma.

48. x. A translation of the Bhagavad Gitā in verse.

49. xi. *The Mahābhārata* in Kashmiri.